परत्वाऽपरत्वद्विपृथक्त्वादिषु अपेक्षाबुद्धिर्निमित्तकारणं तस्या विनाशाद्विनाशः । अथवा क्वचिद् विरोधिगुणेभ्यो गुणस्य विनाशः, यथा विभागात् संयोगविनाशः, दुःखात्सुखविनाशः ॥ ३०२ ॥

**कर्म्मणः समवायिकारणोत्तरसंयोगाभ्यां विनाशः ॥ ३०३ ॥**

कर्म्मणो विनाशः क्वचित्समवायिकारणविनाशात् यथा गच्छतो बाणस्यान्तराल बाणादिना विनाशे जाते सति गतिविनाशः । क्वचिदुत्तरसंयोगात् विनाशः यथा बाणादावेव भूम्यादिसंयोगेन गतिविच्छेदः ॥ ३०३ ॥

सामान्यविशेषसमवायानां नित्यत्वाद्विनाशो नास्ति ॥

**प्रागभावस्य तु[1] प्रतियोग्युत्पादकसामग्रीतः[2] ॥ ३०४ ॥**

प्रतियोगी विरोधी सम्बन्धी यथा घटाभावस्य घटः तस्योत्पादिका सामग्री तस्याः प्रागभावस्य विनाशो भवति । यथा मृत्पिण्डचक्रचीवरसकलकारणसमूहात् घटप्रागभावस्य विध्वंसो भवति ॥ ३०४ ॥

**अन्योन्याभावस्य प्रतियोगिविनाशकारणात्[4] ॥ ३०५ ॥**

प्रतियोगी विरोधी तस्य विनाशकारणात् अन्योन्याभावस्य विनाशः स्यात् । यथा घटः पटो न भवति इति अन्योन्याभावः, तयोर्घटपटयोर्मध्ये यतरस्य द्वयोर्वा प्रतियोगिनोर्विनाशकारणात् अन्योन्याभावस्यापि विनाशः स्यात् । अत्यन्ताभावप्रध्वंसाभावयोस्तु नित्यत्वाद्विनाशो नास्ति ॥ ३०५ ॥

अथ सर्वेषां पदार्थानामुत्पत्तिमाह—

**उत्पत्तिस्तु द्रव्यगुणकर्म्मणां समवाय्यसमवायिनिमित्तकारणेभ्यः ॥३०६॥**

द्रव्यस्य घटादेरुत्पत्तिः समवायिकारणात् तन्त्वादेः, असमवायिकारणात् तन्तुसंयोगात्, निमित्तकारणात् कौलिकवेमतुर्यादिकात् । गुणस्य च रूपादेः समवायिकारणं पटादि, असमवायिकारणं तन्तुगतरूपादि, निमित्तकारणम् इश्वरेच्छाऽदृष्टादि, तेभ्य उत्पद्यते गुणः । कर्म्मणः समवायिकारणं बाणादि असमवायिकारणं धनुःसंयोगादि, निमित्तकारणं प्रयत्नादि, तेभ्य उत्पत्तिः ॥ ३०६ ॥

---

१ समवाय्यसमवायिनिमित्तकारणनाशोत्तरसंयोगाभ्यां क नि । जिनवर्धनीकारसम्मतोऽयं पाठः किन्तु स मितभाषिणीकारासम्मतः । मि भा पृ ८८ क पुस्तकस्था । २ 'तु' क नि पुस्तकयोर्नास्ति । ३ घटोत्पादिकासामग्रीत अ पा टि । ४ नाशकारणात् क ।

संयोगित्वमिति। तथोक्ते शरीरादावतिव्याप्तिः तदपि द्रव्येणात्मना सह संयोग्यस्ति, तन्निवृत्त्यर्थं मूर्तेति। तथोक्ते घटादावतिव्याप्तिः, तन्निवृत्त्यर्थं समस्तेति। समस्तद्रव्यसंयोगित्वमित्युक्ते असम्भवि लक्षणं स्यात्। नह्याकाशादिकं समस्तैर्मूर्तामूर्तैर्द्रव्यैः सह संयोग्यस्ति किन्तु मूर्तैरेव सह, अमूर्तानां परस्परसंयोगे संयोगस्य सादेश्यप्रदेशवर्त्तित्वं व्याहन्यते तन्निवृत्त्यै मूर्तेति ॥ ३१९ ॥

का युतसिद्धिः का वाऽयुतसिद्धिरिति तल्लक्षयति—

**विद्यमानयोः सम्बन्धो युतसिद्धिः ॥ ३२० ॥**

स्वावयवेषु पृथक्त्वेन स्थितयोर्विद्यमानयोर्यः परस्परसम्बन्धः सा युतसिद्धिः, यथा हस्तपुस्तकसंयोगः ॥ ३२० ॥

**अविद्यमानयोराधाराधेययोः सम्बन्धोऽयुतसिद्धिः ॥ ३२१ ॥**

अविद्यमानं च विद्यमानं च अविद्यमानविद्यमाने; तयोरेकशेषात् अविद्यमानयोरिति। एतावता कारणं विद्यमानं भवति, कार्यं चाविद्यमानमुत्पद्यते तेदाश्रितत्वेनैव जायते, यथा तन्तुपटयोः। नहि तन्तुभिर्विना पटः कश्चित् पृथग्भवति। अतः अविद्यमानयोराधाराधेयभूतयोर्यः सम्बन्धः सा अयुतसिद्धिः, सा च समवायसम्बन्ध उच्यते। तथा चोक्तम्—अवयवावयविनोर्गुणगुणिनोः क्रियातद्वतोः जातिव्यक्त्योर्विशेषतद्वतोः समवायः सम्बन्धः। एतावता संयोगो युतसिद्धिः समवायोऽयुतसिद्धिरिति भावः ॥ ३२१ ॥

शास्त्रं किं स्यादित्याशङ्क्याह—

**श्रेयःसाधनाभिधायकं शास्त्रम् ॥ ३२२ ॥**

श्रेयसो मोक्षस्य यत्साधनम्—असाधारणं कारणं तदभिधायकं शास्त्रम्। व्यावृत्तिः सर्वत्रापि सुगमतया स्वयं कार्या ॥ ३२२ ॥

प्रान्तमङ्गलमाचरति—

**सप्तद्वीपा धरा यावत् यावत् सप्तधराधराः।**
**तावत् सप्तपदार्थीयमस्तु वस्तुप्रकाशिनी ॥ १ ॥**

यावत् इयं धरा पृथिवी सप्तद्वीपयुताऽस्ति, यावदमी सप्त कुलाचलाः सन्ति तावदियं सप्तपदार्थी वस्तुप्रकाशिनी अस्तु ॥

**इति श्रीखरतरगच्छे श्रीजिनराजसूरिपट्टे जिनवर्धनसूरिविरचिता सप्तपदार्थीटीका समाप्ता ॥ ग्रन्थाग्रम् १८४८ ॥ शुभं भवतु ॥ सं० १५२७ वर्षे चैत्रसुदि ७ गुरौ श्रीपत्तने श्रीपूर्णिमापक्षे पूज्यराजश्रीजयप्रभसूरिभिः शिष्ययशस्तिलकमुनिसमध्यापनाय सप्तपदार्थीटीका लिलिखे परोपकृतये च ॥**

१ कारणाश्रितत्वेनैवोत्पद्यते अ. १ पा. टि। २ साधनश्रेयोऽभिधायकं क।

# अकारादिक्रमेण सप्तपदार्थीसूत्रपाठः ।

| सूत्रम् | पत्राङ्काः | सूत्राङ्काः |
|---|---|---|
| १ अकार्यद्रव्यमसमवेतमेव । | ८४ | ३०० |
| २ अङ्गवैकल्यमाभासहेतुत्वम् । | ७३ | २४२ |
| ३ अज्ञायमानकरणजन्यस्तत्त्वानुभवः प्रत्यक्षप्रमा । | ६८ | २१७ |
| ४ अणुत्वादीनामणुत्वादिकम् । | ६६ | २०५ |
| ५ अत एव सङ्ख्याव्यवहारस्य सङ्ख्याप्रत्यासत्तिनिबन्धनत्वम् । | ८१ | २०८ |
| ६ अतत्त्वज्ञानमप्रमा । | ६८ | २१४ |
| ७ अतीतावस्थावच्छिन्न वस्तुग्रहणं प्रत्यभिज्ञानम् । | ७७ | २५६ |
| ८ अत्र गन्ध-संयोग-विभाग-परत्वाऽपरत्व-सुख-दुःख-द्वेष-संस्कार-धर्मा-ऽधर्म-शब्दा अनित्यैकरूपाः । | ३८ | ८६ |
| ९ अधर्मत्वसामान्यवान् दुःखाऽसाधारण कारणमधर्मः । | ५६ | १६० |
| १० अधर्मः फलावसानो नमस्कारादिनाश्यश्च । | ३७ | ८४ |
| ११ अधर्मोत्पादकत्वं निषिद्धत्वम् । | ५९ | २०० |
| १२ अनादिरनन्तः संसर्गाभावोऽत्यन्ताभावः । | ५९ | १७३ |
| १३ अनादिः सान्तः प्रागभावः । | ५५ | १७० |
| १४ अनवधारणं ज्ञानं संशयः । | ६८ | २१५ |
| १५ अनालिङ्गितोभयकोट्यनवधारणं ज्ञानमनध्यवसायः । | ७७ | २६० |
| १६ अनित्यत्वं प्रध्वंसवत्त्वम् । | ६० | १७५ |
| १७ अनित्यानां कारणत्वं कार्यत्वं च । | ४३ | १०६ |
| १८ अनिष्टव्यापत्तिप्रसञ्जनं तर्कः । | ७५ | २५० |
| १९ अनुभवोऽपि प्रमा अप्रमा च । | २९ | ५५ |
| २० अनुमितिरपि त्रिविधा । | ३० | ६४ |
| २१ अनुमितिप्रमायोगव्यवच्छिन्नं प्रमाणमनुमानम् । | ६९ | २२२ |
| २२ अनेकेषामेकक्षणसम्बन्धो यौगपद्यम् । | ६४ | १९९ |
| २३ अन्धकारोऽपि भासामभाव एव । | ४० | ९७ |
| २४ अन्ये नित्यानित्यरूपाः । | ३८ | ८७ |
| २५ अन्ये स्वाश्रयव्यापकाः । | ३८ | ९० |
| २६ अन्योन्याभावप्रध्वंसाभावयोस्तु निमित्तादेः केवलादुत्पत्तिः । | ८६ | ३११ |
| २७ अन्योन्याभावस्य प्रतियोगिविनाशकारणात् । | ८५ | ३०५ |
| २८ अन्वयव्यतिरेकी केवलान्वयी केवलव्यतिरेकी चेति । | ३० | ६६ |
| २९ अपक्षेपणत्वजातिमदधोदेशसंयोगकारणं कर्मापक्षेपणम् । | ५७ | १६३ |
| ३० अपरं तु सकलं शास्त्रं सुबोधमिति । | ८६ | ३१२ |
| ३१ अपरत्वसामान्ययोगि अपरव्यवहारासाधारणं कारणमपरत्वम् । | ५३ | १४८ |
| ३२ अपरे भेदाः स्वयमूहनीयाः । | ४३ | १०८ |

# शुद्धिपत्रम्

| पत्राङ्कः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २८ | १८ | कर्मजो विभागजश्चेति। | कर्मजः संयोगजश्चेति। |
| २९ | २ | श्चति | श्चेति। |
| ३२ | ३ | विपक्षद्व्यावृत्तिः | विपक्षाद् व्यावृत्तिः |
| ५३ | ५ | परत्वव्यवहारा | परव्यवहारा |
| ५६ | २३ | कारणं धर्मः। | कारणमधर्मः। |
| ८७ | १८ | भिन्नविभिक्त्यन्त | भिन्नविभक्त्यन्त |

॥ सर्वज्ञाय नमः ॥

॥ श्रीजयप्रभसूरिगुरुभ्यो नमः ॥

शिवादित्याचार्यसूत्रिता

# स प्त प दा र्थी

जिनवर्धनसूरिकृतव्याख्यया सहिता ।

श्रीवर्धमानजिनपोऽस्तु स विघ्नहन्ता
सिंहः स्वतः प्रबलवीर्ययुताय यस्मै ।
दत्वा निजासनमसौ कुरुतेऽङ्घ्रिसेवां
सिंहासनोपरि यतो भगवान् रराज ॥ १ ॥

प्रभावविभवावासं प्रतिभादानदक्षिणम्[1] ।
स्पृशामि शिरसा [2]सौधं गुरुपादरजःकणम् ॥ २ ॥

[3]पूर्वशास्त्रानुसारेण बालानां मन्दमेधसाम् ।
शे[4]मुषीसिद्धये रम्या जिनवर्द्धनसूरिणा ॥ ३ ॥

अज्ञानतिमिरध्वंससप्तसप्तिप्रभानिभा ।
किञ्चित् सप्तपदार्थीया व्याख्या प्रस्तूयते मया ॥ युग्मम् ॥ ४ ॥

अतिगहनगम्भीरकणादसूत्र-प्रशस्तकरभाष्यादिमहाशास्त्रेभ्योऽल्पमेधसां शिष्याणां पदार्थबोधाऽसम्भवात् श्रीशिवादित्याचार्यः तत्प्रतिबोधायाऽल्पतरं सुबोधं सप्तपदार्थी-प्रकरणं चिकीर्षुरादौ सर्वविघ्नोपशान्तये शिष्टाचारप्रतिपालनाय चेष्टदेवतानमस्कारमाह—

**हेतवे जगतामेव संसारार्णवसेतवे ।**
**प्रभवे सर्वविद्यानां शम्भवे गुरवे नमः ॥ १ ॥**

**नमः**—भक्तिभरनिर्भरो मनोवाक्कायैः प्रह्वीभवामि । 'नम' इत्युक्ते कस्मै नम इत्या-काङ्क्षा । तन्निरासार्थं 'शम्भव' इति । शं सुखं भवत्यस्मादिति शम्भुः--इतिकृत्वा स्रक्-चन्दनवनितादेरपि नमस्या स्यात् । तन्निरासार्थं 'गुरव' इति । ननु गृणाति वदति तत्त्वमिति गुरुः--इतीश्वरे गुरुत्वं न सम्भवति, तस्याशरीरत्वेन वक्तृत्वायोगाद् इति चेत्; न, शब्दा हि यथाप्रस्तावं प्रवृत्तिमनुवर्तन्ते न पुनर्व्युत्पत्तिमात्रम् । व्युत्पत्तिमात्रानुगमनाङ्गीकारे गच्छतीति

---

१ दक्षणम् अ. २ । २ सौव अ. १ । ३ श्लोकोऽयं अ. २ प्रतौ नास्ति । ४ शेमुषी = बुद्धिः । ५ प्रशस्तपदभा अ. १ ।

गौरिति व्युत्पत्त्या तिष्ठन् गौर्न स्यात्। ततोऽत्र प्रस्तावाद् गुरवे पूज्याय, तथा च न कोऽपि दोषः।

शम्भवे गुरवे नमः—इत्युक्ते मातृपित्रादिषु व्यभिचारः स्यात्। तन्निवृत्त्यर्थं 'प्रभवे'। तथोक्ते शोभननृपादावतिव्याप्तिः स्यात्। तन्निरासार्थं 'विद्यानाम्' इति। तथोक्ते गुरुभ्यो नमस्या स्यात्। तन्निरासार्थं 'सर्वविद्यानाम्' इति। विद्याः शास्त्राणि सम्यग्ज्ञानं वा, सर्वाश्च ता विद्याश्च सर्वविद्याः, तासां 'प्रभवे' नायकाय। आदिकर्तृत्वेन नमस्कारादिषु शास्त्रादावधिष्ठायित्वेन वा शास्त्रपरिसमाप्तेस्तत्प्रसादाविनाभावाद्वा स्वामिने। अथवा प्रभवं उत्पत्तिस्थानाय वेदादिशास्त्राणामीश्वरोत्पाद्यत्वात्। अथवा सर्वविद्या सम्यग्ज्ञानं येषां ते सर्वविद्यायोगिनस्तेषां प्रभवे नायकाय, योगिभिस्तस्य ध्यायमानत्वात्। तथोक्ते ईश्वरसत्त्वे प्रमाणं नास्तीति नमस्या निराश्रया स्याद् इत्याशङ्क्य प्रमाणगर्भितविशेषणमुपन्यस्यति 'हेतवे जगतामेव' इति। जगन्ति गच्छन्ति अनित्याः पदार्था इत्यर्थः। तेषां हेतवे निमित्तकारणाय। एवकारोऽवधारणार्थस्ततो जगतामनित्यानामेव न नित्यानां हेतुरिति।

अथवा ब्रह्मवादिवन्नोपादानकारणाय किन्तु जगतां हेतवे एव निमित्तकारणायैव। प्रमाणं चादः-भूभूधरादिकं बुद्धिमत्कर्तृपूर्वकम्, कार्यत्वाद्, घटवदिति। तत्र बुद्धिमान् यः कर्त्ता स ईश्वर इति पारिशेष्यानुमानेन तत्प्रतीतिः। न च कार्यत्वं भूभूधरादीनामसिद्धम् सावयवत्वेन तत्सिद्धेः। न चास्य विद्युदङ्कुरादिषु कार्येषु अनैकान्तिकत्वमाशङ्कनीयम्; एतेषामप्यादिशब्देन पक्षे एव प्रतिपादितत्वात्। नन्वेवं सम्प्रति उत्पद्यमानानां तेषां बुद्धिमत्कर्तुरनवलोकनात् पक्षैकदेशे प्रत्यक्षबाध इति चेत्; तदसत्, दृश्यमानोत्पत्तिकार्याणां कारणविलोकनाविनाभावाभावात्, अदृष्टव्यन्तरादिजन्यमानकार्यस्य प्रत्यक्षेणापि दृश्यमानत्वाद्। अतिशयेन तदपि दृश्यते इति चेत्; तदत्रापि समानम्। न च—मूर्त्तत्वेनास्मदादिग्रहणयोग्यात् तस्माद् उत्पद्यमानस्य कार्यस्य दृश्यत्वमुपपद्यते, न पुनः सर्वथा ग्रहणायोग्यादिति—वाच्यम्, सर्वथाऽस्मदादिभिर्द्रष्टुमयोग्यस्यापि धर्माधर्मलक्षणादृष्टस्येष्टसंयोगानिष्टवियोग-रोगादिकार्यस्य दृश्यमानत्वादिति।

'जगद् ईश्वरजन्यं न भवति, प्रमेयत्वाद्, गगनवत्' इति सत्प्रतिपक्षत्वमिति चेत्; न, 'नित्यत्वोपाधिना तस्य प्रतिपक्षस्य बाधितत्वात्। न चात्र शङ्कितत्वमाशङ्कनीयम्;

१ नियमार्थः ४ अ. पा. टि.। २ समवायिकारणाय अ. १ पा. टि.। ३ एव—कारस्य भिन्नक्रमत्वात् अ. १. पा. टि.। ४ प्रसक्तप्रतिषेधेऽन्यत्राऽप्रसङ्गात् शिष्यमाणे संप्रत्ययः परिशेषः, तस्य भावः पारिशेष्य, तस्यानुमानेन अ. १ पा. टि.। ५ कार्यत्वस्य हेतोः अ. १. पा. टि.। ६ साध्यात्यन्ताभाववति हेतोर्गामित्वमनैकान्तिकत्वम् अ. १. पा. टि.। ७ व्यन्तरादेः कारणात् अ. १. पा. टि.। ८ उत्पद्यते अ १। ९ नित्यत्वोपाधौ अ. १. पा. टि.।

साधनाव्यापकत्वे सति साध्यसमव्यापक उपाधिरिति निश्चितोपाधिलक्षणस्यात्रे→विद्यमानत्वात्←। तथाहि यत्र यत्र प्रमेयत्वं तत्र तत्र नित्यत्वमिति व्याप्तिर्नास्ति, पक्षे व्यभिचारात्; यच्चेश्वरजन्यं न भवति तन्नित्यं भवत्येवेति न व्यभिचारः। नन्वत्र केवलान्वयत्वेन साध्योपाधेः कुतश्चिद् विपक्षाद् व्यावृत्तेरभावतः उच्यमानोपाधेः पक्षेतरत्वदोषस्यावश्यंभाव इति चेत्; न, अरण्याङ्कुरादिषु व्यतिरेकसिद्धेः। 'अङ्कुरादिकं सकर्तृकं कार्यत्वाद् घटवद्' इत्यनेन तत्र कर्त्ताऽवश्यंभावी, स च न नागरादिः, तस्य तत्राप्रवृत्तत्वात्। अतो यः कोऽपि अतीन्द्रियः कर्ता स ईश्वरः, इतीश्वरजन्येष्वङ्कुरादिषु नित्यत्वोपाधिव्यावृत्तेः सिद्धत्वात्। अङ्कुरादीनामतीन्द्रियः कोऽपि कर्त्ता वर्तते परं न स ईश्वर इत्यपि सञ्ज्ञामात्रे विवादान्न किञ्चित्। किञ्चाङ्कुरादिष्वनैकान्तिकत्वं, तत्रापि प्रमेयत्वस्य वर्तमानत्वादिति।

हेतवे जगतामेव इत्युक्ते द्रव्ये व्यभिचारः। द्रव्यमपि भावरूपाणां सर्वेषां कार्याणां समवायिकारणत्वेन हेतुर्भवति। तन्निवृत्त्यर्थं 'संसारार्णवसेतवे' इति। अथवा नमस्करणीयसत्त्वे प्रमाणं संसूच्य तन्नमस्करणेऽनुत्तरफलं सूचयति। संसारो भवः, स एव महार्णवः महासमुद्रः। यत उक्तम्–

"भीष्मो भूरिशरीरमत्स्यमकरैरन्योऽन्यमाहारिभिः[2]
सम्पूर्णः कलिलोत्थदुःखसलिलैः सुक्षारताधारिभिः[4]।
द्वेषोद्यद्वडवानलप्रविलसज्ज्वालावलिव्याकुलः
कस्य स्यान्न भिये महाभयकरः संसारनीराकरः ॥ १ ॥"

तत्र सेतुरिव सेतुबन्धसदृशस्तस्मै। असारदुःखभाण्डागारसंसारपारावारप्रापणं फलमिति श्लोकार्थः।

ननु नमस्कारः सप्रयोजनो निष्प्रयोजनो वा शास्त्रादावुपन्यस्तः? न तावदन्त्यः, 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् प्रेक्षावत्ताहानिप्रसङ्गः। आद्यश्चेत्–तत्प्रयोजनं पुण्यफलमात्रं, विघ्नोपशान्तिर्वा? आद्य इति चेत् तर्हि असाक्षात्प्रयोजनस्य तस्य करणमभिधेयादिप्रकाशनप्रस्तावे शास्त्रादावप्रस्तुतं स्यात्। अथ द्वितीयश्चेत्–सा सर्वकालं, शास्त्रपरिसमाप्तिं यावद् वा? नाद्यः सनमस्कारशास्त्रकर्तुरप्यनिधनत्वायोगात्[6]। शास्त्रपरिसमाप्तिं यावदित्यपि वक्तुं न युक्तं, नमस्कारे सत्यपि चम्पूकथादौ शास्त्रे परिसमाप्तेरदर्शनात्। न च तमन्तरेण शास्त्रे परिसमाप्तिरवश्यं न भवतीति वाच्यम्, मीमांसाभाष्यादौ नमस्कारमन्तरेणापि[5] तस्या दर्शनाद् इति चेत्।

१ →←एतच्चिह्नान्तर्गतः पाठः अ. २ पुस्तके भ्रष्टः। २ निकरै अ. १। ३ °न्यमोहोर्म्मिभिः अ. १। ४ सक्षारता अ. २। ५ नमस्कारः अ. २। ६ °रपि निधनत्वायोगात् अ. २।

अत्रोच्यते—नमस्कारो हि त्रिविधो मानसिको वाचिकः कायिकश्च । तत्र मानसिकः शास्त्रपरिसमाप्त्यादिना भाव्यो । चम्पूकथादिषु च वाचिके नमस्कारे सत्यपि मानसिको नास्तीति प्रमीयते । तथाहि—'चम्पूकथादि मानसिकनमस्कारपूर्वं न भवति, अपरिसमाप्तशास्त्रत्वाद्, न यदेवं न तदेवं यथा रत्नाकरावतारिकादि।' मीमांसाभाष्यादि मानसिकनमस्कारपूर्वकं, परिसमाप्तशास्त्रत्वात् तद्वदेवेति । तत्र वाचिकाभावेऽपि सोऽनुमीयते । शेषं तु विकल्पजालमनङ्गीकारपरिहारपराहतम् ।

यद्येवं तर्हि मानसिक एव नमस्कारः क्रियतां, किमस्य वाचिकस्यात्र करणेनेति चेत्; सत्यम्, तथापि मानसिकस्य करणे वाचिकः श्रोतारं शास्त्रादौ प्रेरयति । तदर्थमस्योपन्यासः । किञ्च, शिष्टाचारोऽयं यद्विशेषकार्यादाविष्टदेवतां नमस्कृत्यैव प्रवर्त्तन्त इति तदाचारपालनाय चायमिति ॥ १ ॥

शास्त्रादावभिधेयप्रयोजनसम्बन्धाधिकारिणश्चेति चत्वारः प्रतिपादनीया भवन्ति । अतोऽत्र—अभिधेयाः पदार्थाः । कर्तुरानन्तर्येण प्रयोजनं वैशेषिकशास्त्रानभिज्ञविनेयावबोधः, श्रोतुश्च पदार्थतत्त्वज्ञानम्; एतच्च स्वयमभ्यूह्यम्; पारम्पर्येण तु द्वयोरपि निःश्रेयसावाप्तिः, तच्चाग्रे 'एतेषां तत्त्वज्ञानं निःश्रेयसहेतुः' इत्यनेन प्रतिपादयिष्यति । सम्बन्धो वाच्यवाचकलक्षणः । वाच्यं पदार्थाः, वाचकं शास्त्रम् । अधिकारिणो वैशेषिकशास्त्रप्रवीणाः प्राथमकल्पिका इति । तत्र पूर्वमभिधेयं वाच्यं ततः पदार्था इत्यभिधेयमभिदधानः पदार्थानां लक्षणमाह—

**प्रमितिविषयाः पदार्थाः ॥ १ ॥**

अत्र 'पदार्था' इति लक्ष्यनिर्देशः। 'प्रमितिविषया' इति लक्षणनिर्देशः । प्रमितिः प्रमा, तस्या विषया ग्राह्या ग्रहणयोग्या ये ते पदार्था इति । विषयाः पदार्था इत्युक्ते विपर्ययादिविषयेषु शुक्तिशकले कलधौतायारोपितेषु व्यभिचारः । तन्निवृत्त्यर्थं प्रमितिग्रहणम् । प्रमितिः पदार्था इत्युक्ते प्रमितिव्यतिरिक्तेषु पदार्थेष्वव्याप्तिः, तन्निवृत्त्यर्थं विषया इति ।

ननु प्रमितिः प्रमितिविषया भवति न वा? न चेत्; तत्राऽव्याप्तिः, लक्ष्यैकदेशे लक्षणागमनमव्याप्तिरिति तल्लक्षणम् । ततश्च पदार्थरूपायामपि तस्यां प्रमितिविषयत्वावर्त्तनात् । भवतीति चेत्; तर्ह्यागमविरोधः स्वप्रकाशायाः प्रमितेरीश्वरातिरिक्तायाः काणादैरनङ्गीकारादिति[1] चेत् ।

अत्रोच्यते—प्रमितेरनेकत्वेन प्रमित्यन्तरस्याः प्रमितेर्विषयत्वं न विरुध्यते । तथाहि प्रत्यक्षप्रमाणमनुमानस्य विषयः; यथा 'प्रत्यक्षप्रतीतिः करणसाध्या, क्रियात्वात्, छिदिक्रिया-

---

[1] कणादैः अ. २ ।

वद्' इत्यनेन यत् तत्र करणमनुमीयते तत् प्रत्यक्षप्रमाणम्। अनुमानं च प्रत्यक्षस्य विषयं(यः) यथा धूमानुमाने धूमज्ञानं मानसप्रत्यक्षम्। क्वचिदनुमानस्यानुमानं विषयो भवतीति। ईश्वरप्रत्यक्षाः पदार्था इत्यपि लक्षणान्तरम् ॥ १ ॥

अथवा शास्त्रेषु चतुर्धा प्रवृत्तिः—उद्देशो १, लक्षणम् २, परीक्षा ३, विभागश्चेति ४। तत्र पदार्था इत्युद्देशः, संज्ञामात्रेण पदार्थप्रतिपादनमुद्देश इति तल्लक्षणात्। प्रमितिविषया इति लक्षणम्, 'असाधारणधर्मो लक्षणम्' इति तत्स्वरूपात्। पदव्यवच्छेदः परीक्षा। सा च पूर्वोक्तप्रकारेण करणीया। उद्दिष्टवस्तुनो भेदकथनं विभागोऽतः क्रमप्राप्तमुद्देशलक्षणमभिधाय परीक्षां च संसूच्य विभागमाह—

**ते च द्रव्य-गुण-कर्म-सामान्य-विशेष-**
**समवाया-ऽभावाख्याः सप्तैव ॥ २ ॥**

ततस्ते पदार्थाः 'सप्तैव', नाष्टौ, न षडिति। द्रव्याणि च गुणाश्च कर्माणि च सामान्यानि च विशेषाश्च समवायश्चाभावाश्च 'द्रव्य-गुण-कर्म-सामान्य-विशेष-समवाया-ऽभावाः' एता आख्या येषां ते तथा। 'आख्या'शब्दः प्रत्येकमभिसम्बध्यते।

नन्वभावस्तुच्छत्वान्न पदार्थ इति चेत्; तदसत्। किमिदं तुच्छत्वं नाम? किं प्रमाणाविषयत्वम्, अनुपयोगित्वम्, असमवेतत्वम्, अनाधारत्वं वा, अभोगकारणत्वं वा नियतमन्यज्ञानाधीनज्ञानत्वं वा?[1] नाद्यः पक्षः, इह भूतले घटाभाव इत्यादिप्रकारेण तस्य प्रत्यक्षेणैव प्रमीयमानत्वात्। न द्वितीयः, अनुपयोगित्वमकिञ्चित्करत्वं, तच्च कार्याकर्तृकत्वं, तस्यात्रावर्तमानत्वात्, चक्षुरादिकाचकामलादिदोषाभावादीनां यथार्थप्रतीत्यादिकार्येषु कारणमात्रत्वदर्शनात्। असाधारणकारणत्वं न भवतीति चेत्? न, स्वविषयिण्याः प्रतीतेर-साधारणत्वेनोत्पादकत्वात्। नापि तृतीयः, समवाये नित्यद्रव्येषु च व्यभिचारात्। नापि तुर्यः, स्वलक्षणस्य धारकत्वात्। न पदार्थान्तरस्येति चेत्; तर्हि समवाये व्यभिचारः, तस्यापि स्वलक्षणादतिरिक्तस्यानाधारत्वात्। नापि पञ्चमः; अनिष्टाभावादीनां सुखादि-साधनत्वात्। षष्ठोऽपि दुष्टः, सर्वथाऽनुमेयवस्तुषु नियतं हेतुज्ञानाधीनज्ञानत्वेन व्यभिचारात्। अथ भावस्वरूपरहितत्वमिति चेत्; तद्भावस्वरूपं पदार्थो वा न वा? न चेति वक्तुं न युक्तं प्रतीतिविषयाभावप्रसङ्गात्। पदार्थश्चेत्; तर्हि भावस्वरूपं भावस्वरूपे वर्तते न वेति? न चेत्; तत्र व्यभिचारः, पदार्थत्वेऽपि भावस्वरूपरहितत्वात्। वर्तते इति चेदात्माश्रयः। अन्य[2]-वर्तने वा तत्रापि पूर्वोक्तविकल्पनाऽनिवृत्तेरनवस्थावल्लेरुल्लासः स्यात्। भावलक्षणरहितत्वेऽप्येवमेव वाच्यम्। विधिमुखेन प्रतीयमानत्वं तुच्छत्वमिति चेत्; तन्न, विधिः स्वरूपसत्त्वं

१ 'न वा' इति अ. २ प्रतौ नास्ति. २ 'अन्य' इति अ. २. प्रतौ नास्ति।

सत्ता वा ? आद्यश्चेत्राभावस्य तुच्छत्वम्; इह भूतले घटाभावोऽस्तीत्यस्तिप्रतीतिविषयत्वेन स्वरूपसत्त्वाधिकरणत्वात्। द्वितीयपक्षे तु सामान्यादिषु व्यभिचारः। निषेधरूपेण प्रतीतत्वमित्यपि न किञ्चित्। किं निषेधः प्रतियोगिनो वाऽभावस्य वा ? न तावदभावस्य, तस्य प्रतिषेधे भावोपलम्भप्रसङ्गात्। प्रतियोगिनश्चेत्, अभावे किमागतम् ? ततोऽन्यत्वात्।

अथाभावः पदार्थो भवति परं न पदार्थान्तरमिति चेत्; न, कस्मिंश्चिदन्तर्भावाभावात्। तथाहि अभावो द्रव्ये नान्तर्भवति, निर्गुणत्वात्। नापि गुणे, द्रव्यमात्रवृत्तिनियमात्। नापि कर्म्मणि अचलनात्मकत्वात्। नापि सामान्ये, सामान्येऽपि वर्त्तमानत्वात्। नापि विशेषेषु, कार्येष्वपि वर्त्तमानत्वात्। नाऽपि समवायेऽनेकत्वात्। प्रमाणं च–'अभावः पदार्थान्तरं भवितुमर्हति, पदार्थत्वे सति अन्यस्मिन्ननन्तर्भूतत्वाद् गुणादिवद्' इति प्रमाणेन तत्सिद्धिरिति ॥

ननु मूलशास्त्रे षट्पदार्थप्रतिपादनाद् विरोध इति चेत्; न, काणादैः सप्तत्वनिषेधाऽकरणात्, भाष्यकारादीनां त्वस्माभिराप्तत्वेनाङ्गीकारात्, प्रकरणस्य चैवंविधलक्षणस्य प्रतिपादनात्। तथा चोक्तम्–

" शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।
आहुः प्रकरणं नाम शास्त्रभेदं विपश्चितः ॥ २ ॥"

प्रकरणं शास्त्रैकदेशं प्रतिपादयति, शास्त्रानुक्तं युक्तियुक्तं कमपि विशेषं च वक्ति। अत इदं प्रकरणमभावं सप्तमं पदार्थं प्रतिपादयन्न विरुध्यते इति।

तत्र सर्वेषामाधारत्वेनोपजीव्यत्वात् पूर्वं द्रव्योपन्यासः। तदनन्तरं मूर्त्तामूर्त्तद्रव्यवृत्तित्वाद् गुणस्य। ततश्च मूर्त्तद्रव्यमात्रवृत्तित्वात् कर्मणः। त्रयापेक्षत्वात्तदनु सामान्यस्य। समवायवतां सर्वेषां सङ्कलनार्थं विशेषाणाम्। तदनन्तरं पूर्वोक्तेषु पञ्चसु समवायो वर्त्तत इति सूचनाय समवायस्य। तथा चोक्तम्–"अवयवावयविनोर्गुणगुणिनोः क्रियातद्वतोर्जातिव्यक्त्योर्विशेषविशेषिणोः समवायः सम्बन्धः" इति। तदनु अवशिष्टस्याभावस्येति ॥ २ ॥

अथ मूलभेदानां प्रभेदानां च सर्वेषां लक्षणानि सङ्कलितान्यवबिभणिषुः समस्तांस्तानभिदधानः पूर्वमुपन्यस्तं द्रव्यपदार्थं भिनत्ति–

**तत्र द्रव्याणि पृथिव्यप्तेजो-वाय्वा-ऽऽकाश-**
**काल-दिगात्म-मनांसि नवैव ॥ ३ ॥**

'तत्र' तेषु सप्तसु पदार्थेषु अग्रे प्रतिपाद्यलक्षणानि 'नवैव' नवसङ्ख्याकानि भवन्ति। एवकारः पूर्ववत्। नाधिकानि न न्यूनानीत्यर्थः।

तत्र सर्वप्रमाणज्येष्ठप्रत्यक्षग्रहणयोग्यानां पूर्वं पृथिव्यप्तेजसामुपन्यासः। तत्राप्येकादशगुणात्तेजसः, चतुर्दशगुणानां पृथिव्यपाम्। तत्रापि सर्वाधारभूतत्वात् पृथिव्याः। तदनु बाह्येन्द्रियग्राह्यगुणाधारत्वात् पृथिव्यप्तेजोऽभितुल्यत्वख्यापनार्थं वायोः। तदनु पञ्चानामपि महाभूतानां सङ्कलनार्थमाकाशस्य। ततश्च मूर्तमात्रवृत्त्योः परत्वापरत्वयोरुत्पादकत्वात् कालदिशोः। अथवा, शीतातपमेघवृष्टिवनस्पतिपुष्पफलादीनां नानाविधमूर्तवस्तूनां कारणत्वात् कालदिशोः। विभूनां सर्वेषामेकत्रकरणार्थमात्मनः। तदन्ववशिष्टस्य मनस इति ॥ ३ ॥

यथोद्देशस्तथानिर्देश इति न्यायात् पूर्वोपन्यस्तभेदानभिधाय सम्प्रति द्वितीयं गुणपदार्थं भिनत्ति—

**गुणास्तु रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग-परत्वा-ऽपरत्व-बुद्धि-सुख-दुःखे-च्छा-द्वेष-प्रयत्न-गुरुत्व-द्रवत्व-स्नेह-धर्मा-ऽधर्म-शब्दाश्चतुर्विंशतिरेव ॥ ४ ॥**

'गुणा' वक्ष्यमाणलक्षणाः। तुशब्दो द्रव्यपदार्थाद्विशेषख्यापनार्थः। रूपं च रसश्चेति द्वन्द्वः कार्यः। एवकारः पूर्ववत्। तत्र पूर्वं रूपस्य तदनु रसस्य ततश्च गन्धस्येत्यादिक्रमेण य उपन्यासः तत्कारणानि गुणभेदाना रूपरसादीनां प्रभेदावसरे वक्ष्यामः।

अत्राह भाट्टभट्टारकः—ननु शब्दस्य गुणत्वमनुपपन्नं, यतः—'शब्दो द्रव्यं भवितुमर्हति, साक्षादिन्द्रियसम्बन्धेन प्रतीयमानत्वात् घटवत्' इति प्रमाणविरोधात्। न च—'अत्र साक्षादिन्द्रियसम्बन्धः संयोगः समवायो वा? । समवायश्चेत्; तर्हि प्रतिज्ञाहेत्वोर्विरोध, शब्दप्रत्यायकमिन्द्रियं श्रोत्रं तच्चाकाशरूपं, तस्मिन् शब्दद्रव्यं समवेतमिति न सम्भवति, अमूर्तद्रव्ये द्रव्यान्तरसमवायासम्भवात्। संयोगश्चेत् तर्हि संयोगसिद्धौ द्रव्यत्वसिद्धिः, तत्सिद्धौ संयोगसिद्धिरिति परस्पराश्रयः स्यात्'—इति वाच्यम्; साधनसामान्यस्यैव साध्यगमकत्वात्। विशेषाङ्गीकारे तु धूमानुमानेऽपि 'धूमः पर्वतनिष्ठो अन्यो वा' आद्यश्चेत्; साधनविकलो दृष्टान्तः। अन्यश्चेदसिद्धो हेतुः' इत्येवंप्रकारैः सर्वानुमानभङ्गप्रसङ्ग इति। तस्मात् साक्षादिन्द्रियसम्बन्धश्चोभयवादिसिद्धः सन् सामान्याकारेणैव गृह्यत इति चेत्।

अत्र पृच्छामः—शब्दो मूर्तं द्रव्यममूर्तं वा? आद्यश्चेत्; स्पर्शशून्यः स्पर्शवद् वा? नान्त्यः, शब्दः स्पर्शशून्यः, प्रत्यक्षत्वे सति स्पर्शनाऽग्राह्यत्वात् इति प्रमाणविरोधात्। नाप्याद्यः, प्रत्यक्षस्पर्शशून्यस्यामूर्तत्वाविनाभावात्। अथाऽमूर्तश्चेत्; न, 'शब्दोऽमूर्तं द्रव्यं न भवति बाह्येन्द्रियेण प्रतीयमानत्वात् पटवत्' इति प्रमाणबाधितत्वात्। अतः—'शब्दो द्रव्यं न भवति, मूर्तामूर्तद्रव्ययोरनन्तर्भूतत्वाद् गुणादिवत्' इति। तस्माच्छब्दो गुण एव। तत्रानुमितिर्यथा 'शब्दो गुणो भवितुमर्हति, कर्मान्यत्वे सति जातिमात्राश्रयत्वात्' रूपवत्। द्रव्यसाधर्म्

साधनमपि संयोगित्वोपाधिना बाधितत्वेनागृहीतव्याप्तिकत्वान्न किञ्चिदिति ॥ ४ ॥

अथ क्रमप्राप्तानि कर्माणि भिनत्ति—

**कर्माण्युत्क्षेपणा-ऽपक्षेपणा-ऽऽकुञ्चन-प्रसारण-गमनानि पञ्चैव ॥५॥**

निगदसिद्धमिदं सर्वम् । सर्वस्यौर्ध्वकर्मणः स्वर्गादिगमनस्याभीष्टत्वादादावुत्क्षेपण-स्यापक्षेपः । तदनु तद्विरुद्धत्वादपक्षेपणस्य । प्रसारणस्याकुञ्चनपूर्वकत्वात् पूर्वमाकुञ्चनस्य । ततश्च तद्विपरीतत्वात् प्रसारणस्य । तदनु अवशिष्टस्य गमनस्य । भ्रमण-रेचन-स्पन्दनादीनां गमनान्तर्गतत्वेन नाधिकत्वम् ॥ ५ ॥.

अथ सामान्यभेदान्निरूपयति—

**सामान्यं परमपरं परापरं [२]चेति ॥ ६ ॥**

परस्परं विभक्तेषु पदार्थेषु योऽनुवृत्तिप्रत्ययो जायते तत्र सामान्यं कारणम् । तत् त्रिविधं भवति—केवलानुवृत्तिहेतुभूतं परम् । परापेक्षया अत्यल्पवृत्त्यपरम् । तदुभयस्वभावं परापरम् ।

अत्यधिकत्वात्पूर्वं परस्य, परापरस्वरूपज्ञानस्य परापरयोर्ज्ञानपूर्वकत्वात्परापरसामा-न्यात् पूर्वमपरस्य, तदनु अवशिष्टस्य परापरस्योपन्यासः ।

ननु परं सामान्यं सत्ता, अपरं द्रव्यत्वादि तदपेक्षया पृथिवीत्वादि तदपेक्षया घटत्वादि; ततः सामान्यद्वैविध्येनैव कार्यसिद्धौ किमनेनाकाण्डकूष्माण्डपातकल्पेन [परापरेण] कल्पितेन इति चेत् ? तदयुक्तम्, घटत्वसामान्यापेक्षया किं पृथिवीत्वं परमपरं वा ? न तावदपरं ततोऽधिकवृत्तित्वात् सत्तावत । नापि परं स्वाश्रयादितरेभ्यो जलादिभ्यो व्यावर्तकत्वात् । यच्च परं तन्न स्वाश्रयव्यावर्तकम् । यद्यपि सत्ता सामान्यादिभ्यः स्वयं व्यावृत्ता तथाऽपि न स्वाश्रयमितरेभ्यो व्यावर्तयति, तेषामपि सद्बुद्धिवेद्यत्वात् । तर्हि तेष्वपि सत्तापत्तिरिति चेत्; तदास्तां नाम उपचारात् । कथं तर्हि सर्वत्राप्युपचारादेव न कल्पेत इति चेत् ? न, क्वचित्तात्त्विकाभावे उपचारासम्भवात् । उपचारश्च तात्त्विकासम्भव[३] एव भवति । सत्ता हि सामान्यादिष्वसम्भाविनी । तथाहि सत्तायां सत्ताङ्गीकारे आत्माश्रयः । सामान्यान्तराङ्गीकारे च तत्रापि सामान्यान्तरं तत्रापि तथैवेत्यनवस्थादौस्थ्यं स्यात् । विशेषेषु सामान्याङ्गीकारे स्वरूपहानिप्रसङ्गः । यच्च[४] विशेषेषु 'अयं विशेषः', 'अयं विशेषः' इत्याकारोऽनुगमोऽस्ति स विशेषग्राहकव्यावृत्तिप्रत्ययगतसामान्यकृत एव । समवाये च सम्बद्धमसम्बद्धं वा वर्तते ? न तावदसम्बद्धं सामान्यस्यासम्बद्धस्य कचिद्वर्तनाऽसम्भवात् । नापि सम्बद्धम्—सम्बन्धो हि संयोगः समवायो वा ? न तावदाद्यः. द्वयोर्द्रव्ययोरेव संयोगसम्भवात् । नापि समवायः

१ प्रकटमित्यर्थः अ १ पा. टि. । २ चेति त्रिविधम क, नि. । ३ उपचारसंभवः अ १ । ४ यस्य—अ १ ।

सम्बन्धस्य नियमेनोभयनिष्ठत्वेन समवायेऽपि वृत्तिवापत्त्या अशे आत्माश्रयप्रसङ्गात् । नाप्यभावे पूर्वोक्तसम्बन्धासम्भवात् । अत सामान्यादिषु तात्त्विकसत्ताङ्गीकारे बाधासम्भवात् तेषामपि सद्बुद्धिवेद्यत्वाच्चोपचारादस्तीति सा कल्प्यत इति । पृथिवीत्व व्यावर्तक सामान्यं च भवति, अनुवृत्ति-व्यावृत्तिप्रत्ययहेतुत्वात् । परापरभेदयोश्च नान्तर्भूत, तस्मात् पृथिवीत्वादि परापर सामान्यान्तर कल्प्यत इति ।

अथ मतं यत् स्वाश्रयव्यावर्तक तदपरम्, न पुनरल्पवृत्तीति । न, विशेषेष्वन्त्येषु व्यभिचारात् । सामान्यमिति विशेषणाङ्गीकारे द्रव्यत्वादिषु व्यभिचार । ननु तदपरमेवेति चेत्, न, प्रमाणविरोधात् । तथाहि--द्रव्यत्वादिसामान्यमपर न भवति, स्वतोऽल्पवृत्तिजात्यन्तरवदाश्रितत्वात् सत्तावत् । यदपर तत्तथा न भवति यथा घटत्वम् । नापि परम् स्वाश्रयव्यावर्तकत्वात् घटत्ववटत्ववत् । अत पारिशेष्यात् परापर सामान्यान्तरमकामेनाप्यभ्युपगन्तव्यम् ।

अथाहुरेके पदार्थाना स्वरूपमेव सत्त्व न पुन पदार्थान्तर शक्तिवद् इति, तदपि न शोभनम् । स्वरूप पदार्थेभ्यो भिन्नमभिन्न वा [१] आद्ये कल्पे एकमेव तत्, प्रतिपदार्थं भिन्न वा [२] एकमेवेति चेत्, तर्हि संज्ञान्तरमात्रे विवाद । द्वितीयपक्षे तु नानुवृत्तिप्रत्ययहेतु, प्रतिपदार्थं भिन्नत्वाद् विशेषवत् । अभेदपक्षाङ्गीकारे परस्परविलक्षणपदार्थेषु तदव्यतिरिक्त स्वरूप कथमनुवृत्तिप्रत्यय कुर्यात् [३] परस्परव्यावृतत्वेन केवलव्यावृत्तिप्रत्ययहेतुत्वा सम्भवाद् विशेषवदिति ॥ ६ ॥

विशेषभेदानाह--

**विशेषास्तु यावन्नित्यद्रव्यवृत्तित्वादनन्ता एव ॥ ७ ॥**

'तु'शब्द पुनरर्थे । विशेषयन्ति स्वाश्रयमिति विशेषा । तेऽनन्ता --न विद्यतेऽन्त पर्यवसान गणनया येषा ते तथा । आनन्त्ये हेतुमाह यावदिति यावत्सङ्ख्याकानि नित्यद्रव्याणि तेषु समवायलक्षणा वृत्तिर्येषा ते तथा । तेषु तत्त्व नाम धर्म । तस्मात्प्रतिनित्यद्रव्यमेकैको विशेषो वर्तते । नित्यद्रव्याणा परमाणूना गगन काल दिशा ऽऽत्म मनसा च सर्वेषा मीलने आनन्त्यात् तद्गताना विशेषाणा प्रत्येक भिन्नानामानन्त्यम् । ते तु योगिनामेव विषया । प्रयोजन चैषा व्यावृत्तिप्रत्यय । यथा अनित्यद्रव्येषु विलक्षणा कारगुणक्रियादिभि 'अयमस्मादन्य' इति व्यावृत्तिरनुभूयते, तथा परमाण्वादिष्वाकारा

---

१ औपचारिकी सत्ता अ पा टि । २ इति आक्षेप अ १ पा टि । ३ स्वरूपम् अ १ पा टि । ४ नामान्तर अ २ । ५ हेत्वसम्भवात अ १ । ६ गुणनया अ १ पा टि । ७ भिन्नाकार अ १ पा टि ।

दीनां तुल्यत्वान्न तत्कृतः परस्परं भेदावगमः। तेन यैस्तद्व्यतिरिक्तैः प्रतिद्रव्यं व्यावृत्ति-प्रत्ययो जन्यते ते विशेषाः।

ननु विशेषेषु विशेषा वर्तन्ते, वा न? वर्तन्ते इति चेत्; ते एव विशेषान्तराणि वा? आद्ये आत्माश्रयः। द्वितीयकल्पे तु स्पष्टैवाऽनवस्था। न चेत्; तर्हि यथा तेषु विशेषेषु कल्पनां विनापि व्यावृत्तिप्रत्ययस्तथा नित्यद्रव्येष्वेवं सम्भविष्यतीति किं तत्कल्पितेन ?-इति चेत्; न, तद् भस्मप्रलेपप्रायम्, द्रव्याणामेतत्स्वरूपत्वात्। यथाहि, अप्रकाशात्मा घटादिः प्रकाशेन प्रदीपादिना प्रकाश्यते, न पुनः प्रकाशस्वभावरूपः प्रदीपः प्रदीपान्तरेण, तथा अविशेषस्वभावेषु द्रव्येषु विशेषकृतो व्यावृत्तिप्रत्ययः, विशेषात्मसु विशेषेषु च स्वत एव, न पुनस्तद्गतविशेषान्तरकृत इति ॥ ७ ॥

समवायं निरूपयति—

**समवायस्त्वेक एव ॥ ८ ॥**

अयुतसिद्धानामाधाराधेयभूतानाम् 'इह' प्रत्ययहेतुर्यः सम्बन्धः स समवायः। अस्य सत्त्वे च प्रमाणम् 'इह तन्तुषु पटः' 'इह पटे रूपम्' इत्यादिर्य 'इह' प्रत्ययः स सम्बन्धनिमित्तको निर्बाधेहेतिप्रत्ययत्वात्, 'इह पात्रे घृतम्' इतिप्रत्ययवत्। न चायं संयोगः, तस्य परस्परपरिहारेण पृथगवस्थातुं योग्येष्वेव सम्भवात्। अतो योऽयं सम्बन्धः [स] समवायः। स चैक एव। अत्र प्रमाणम्—समवायः एक एव, भावत्वे सति द्रव्य-गुणादिसाधारणधर्मत्वात्, सत्तासामान्यवत्।

ननु समवाय एको धर्मरूपः प्रतिपदार्थं सामस्त्येन, एकदेशेन वा वर्तते? एक-देशेन चेत्; सांशतापत्तिः। सामस्त्येन चेत्; तर्हि सामस्त्येनैव एकस्मिन् वर्तनेन परि-समाप्तत्वान्न पुनः पदार्थान्तरे वृत्तिर्युक्ता। यथैकस्मिन् कुण्डे सामस्त्येन वर्तमानं बदरं नान्यत्र वर्तते। तस्मादेकः समवायः द्रव्यगुणकर्मसामान्यविशेषेषु वर्तते इति न सारमिति चेत्।

तत् प्रलापमात्रम्; संयोगविभागद्वित्रिपृथक्त्वादिषु धर्मेष्वनेकनिष्ठेषु पूर्वोक्तविकल्प-दूषणानिवृत्तेरतिप्रसङ्गात् ॥ ८ ॥

अभावभेदानभिदधाति—

**अभावस्तु प्रागभाव-प्रध्वंसाभावा-ऽत्यन्ताभावा-ऽन्योऽन्याभावलक्षणश्चतुर्विधः ॥ ९ ॥**

---

१ विशेषस्वरूपेषु अ. १. पा. टि.। २ तावेताऽयुतसिद्धौ द्वौ विज्ञातव्यौ ययोर्द्वयोरेक-मपराश्रितमेवाऽवतिष्ठते अ. १. पा. टि.। ३ द्वि अ. २। ४ रितिप्रसङ्गात् अ १। ५ भावान्यो-न्याभावात्यन्ताभाव क.।

'तु'शब्द पुनरर्थे । चत्वारो विधा प्रकारा यस्य स तथा । 'लक्षण'शब्द स्वरूपार्थ । 'प्राक्' पूर्वं प्रतियोगिनोऽभावोऽविद्यमानता 'प्रागभाव' । यथा तन्तुषु पटस्यानुत्पन्नस्य । प्रध्वसश्चासावभावश्च, प्रध्वसे सति वाऽभाव, न तु प्रध्वसस्याभाव इति समास । यथा लकुटाद्यभिघाते जाते घटादिविनाश । अत्यन्तमनाद्यनन्तत्वेनाऽभाव 'अत्यन्ताभाव' । यथा आत्मनि रूपस्य, घटादिषु ज्ञानस्याभाव । अन्योऽन्य परस्परमभाव 'अन्योऽन्याभाव' । यथा घट पटो न भवति, पटो घटो न भवति ।

ननु पृथक्त्वेनैवास्य प्रत्ययस्य सिद्धत्वात् किमन्योऽन्याभावकल्पनेनेति चेद्, न, गुण गुणिनो 'गुणो गुणी न भवति' 'गुणी गुणो न भवति' इति स्वरूपभेदेनैव परस्पर भेदे अन्योऽन्याभावस्य सम्भवात् । पृथक्त्व तु पृथगाश्रयाश्रितयो 'अयमस्मात् पृथग्' इति पृथग्व्यवहारे सत्येव भवति नाऽन्यथा, अतोऽस्य कल्पना ॥ ९ ॥

एव सप्तानामपि पदार्थाना मूलभेदानभिधाय तद्गतान् पुनर्विशेषानभिदधाति । तत्र पूर्वोद्दिष्टद्रव्यपदार्थप्रथमभेदस्य पृथिवीलक्षणस्य विशेषानाचष्टे—

**पृथिवी नित्याऽनित्या च ॥ १० ॥**

'नित्या' अविनाशिनी, 'अनित्या' प्रध्वसयोग्या ॥ १० ॥

सा का नित्या किं लक्षणा चाऽनित्येत्याह—

**परमाणुलक्षणा नित्या, कार्यलक्षणा त्वनित्या ॥ ११ ॥**

परममण्वणुपरिमाण यत्र स 'परमाणु' । ननु परममिति विशेषणम् । विशेषण च व्यवच्छेदक भवति, तर्हि किमिद विशिनष्टि—निराकृत्य करोति इति[1] तदुच्यते—द्व्यणुकेऽप्यणुपरिमाण वर्तते । तन्निवृत्त्यर्थं परमेति । द्व्यणुकेऽणुपरिमाण न सम्भवतीति चेत्, न द्व्यणुकपरिमाणमणुरूप भवति, द्रव्यारम्भकद्रव्यनिष्ठत्वे सति अनारम्भकपरिमाणत्वात्, परमाणुपरिमाणवत् । ननु परमाणुपरिमाणस्यानारम्भकत्वे द्व्यणुके कुत परिमाणारम्भ इति चेत्[2] एकत्वसङ्ख्यात इति वदाम । ननु यथा कपालादिपरिमाण घटादिपरिमाणस्यारम्भकम्, तथा परमाणुपरिमाणमेव परिमाणस्यारम्भक कुतो नोच्यते इति चेत्? प्रमाणविरोधात्, प्रमाण चाद – परमाणुपरिमाणमनारम्भक नित्यद्रव्यपरिमाणत्वादाकाशपरिमाणवत् । तथा चोक्त भाष्यकारेण "आरम्भकत्व चान्यत्र पारिमाण्डल्या-दिभ्य [भा० २९] । पारिमाण्डल्य च परमाणुपरिमाणमुच्यते ।" द्व्यणुकपरिमाणस्याप्यनारम्भकत्व त्र्यणुकपरिमाणस्य मध्यमस्य विजातीयत्वेनाकारणत्वात् ।

---

१ लकु-अ । । २ करिणत क कि ।

ननु द्व्यणुकपरिमाणात्परमाणुपरिमाणस्य कुतः परमत्वम्, अणुत्वाविशेषाद् इति चेत्, उच्यते–द्व्यणुकं समवायिकारणादधिकपरिमाणं कार्यत्वात्, तन्तूत्पन्नपटवत्। द्व्यणुकस्य समवायिकारणं च परमाणुः। ततः किञ्चिदधिकपरिमाणादतिशयादणुत्वेन परमाणुपरिमाणस्य परमत्वमिति।

परमाणवः स्वरूपं लक्षणं यस्याः सा 'परमाणुलक्षणा' परमाणुस्वभावेति यावत्। तत्प्रतीतौ प्रमाणमदः–'मूर्त्तमादिकार्यं कुतश्चित्समवायिकारणादुत्पन्नं भावकार्यत्वात्, घटवत्। यद् आदिकार्यं तत्र कार्यान्तरात् समवायिकारणादुत्पद्यते तस्य कार्यरूपात् कारणादवश्यं पश्चाद्भावित्वेन आदिकार्यत्वभङ्गप्रसङ्गात्, अतो यन्नित्यं तत्तस्य समवायिकारणम्, ते परमाणव इति सा नित्या।

अत्राहुरेके–पृथिवीपरमाणवोऽनित्याः, पाकजरूपाधिकरणत्वात् घटवत्। तन्न किञ्चित्, परमाणूनां ग्राहकेण प्रमाणेन नित्यत्वेनैव ग्रहणात् कालात्ययापदिष्टत्वात्। तथाहि–पृथिवीत्वं नित्यसमवेतम्, घटपटजातित्वात्, सत्तावत्। अस्यायमवयवार्थः– नित्ये समवायलक्षणा वृत्तिर्यस्य तन्नित्यसमवेतम्। घटश्च पटश्च घटपटौ, तयोः साधारणा जातिः। तत्र तत्त्वं नाम धर्मः–स्वरूपम्, न पुनर्जातिः, जातौ जात्यन्तरासम्भवात्। तस्मात् घटपटयोः साधारणा जातिः पृथिवीत्वं द्रव्यत्वं सत्ता वा स्यात्। घटत्वं तु घटमात्रनिष्ठत्वात् घटपटयोः साधारणं न भवति। पटत्वमपि पटमात्रनिष्ठत्वात् तथा। न च घटपटमात्रनिष्ठं घटपटत्वं नाम अवान्तरजातिभेदोऽस्ति। द्रव्यत्वसत्त्वे तु नित्येष्वाकाशादिषु समवेते सिद्धे। न च पृथिवीत्वमप्याकाशादिषु समवेतमिति सम्भवति। ततः काचित् पृथिवी नित्याङ्गीकार्या। सा च न कार्यलक्षणा भवेत् कार्यत्वनित्यत्वविरोधात्। अतः परमाणुलक्षणा पृथिवी नित्येत्यनिच्छताप्यङ्गीकार्या। 'कार्यलक्षणा' कारणाधीनोत्पत्तिमती प्रध्वंसयोग्या। 'तु' पुनरर्थः ॥ ११ ॥

आद्यभेदविशेषाणामानन्त्यादक्रमशक्यत्वाद् द्वितीयभेदस्य प्रभेदानभिदधाति—

**सा[1] शरीरेन्द्रियविषयरूपा ॥ १२ ॥**

'सा' कार्यलक्षणा पृथिवी 'शरीररूपा', 'इन्द्रियरूपा', 'विषयरूपा'; रूपशब्दस्य सर्वत्राभिसम्बन्धात् त्रिप्रकारा भवति ॥ १२ ॥

तत्र प्रथमं प्रकारं प्रकाशयति—

**शरीरमस्मदादीनां प्रत्यक्षसिद्धम् ॥ १३ ॥**

---

१ साऽपि क,नि.।

'शरीरं' भोगायतनम् 'अस्मदादीनाम्', वयमादौ येषां तेऽस्मदादयो देवर्षिमानुष-पिपीलिकासर्प्पप्रभृतयः प्राणिनस्तेषाम्। अत्र यत् स्वस्यादित्वं तद् वक्तुरत्यन्तं सुप्रतीतत्वात्, न तु स्वस्य पूज्यत्वख्यापनार्थम्। तत्प्रत्यक्षेण चक्षुषा स्पर्शनेन वा सिद्धं प्रतीतं 'प्रत्यक्षसिद्धम्'।

ननु देवर्षिप्रमुखाणां शरीराणामप्रत्यक्षत्वात् प्रत्यक्षसिद्धमित्यसम्बद्धमिति चेत्। न, अभिप्रायापरिज्ञानात्। प्रत्यक्षसिद्धमित्यनेन यथा आप्यादिशरीरमप्रत्यक्षमेव, न तथा पार्थिवमित्याचष्टे।

ननु तैजसशरीरमपि सूर्यमण्डलादिप्रत्यक्षेण लक्ष्यते इति चेत्; न, तस्य तैजसविषयान्तर्गमनात्। शरीरं पुनस्तदन्तर्गतमन्यदेवाभ्युपगम्यते।

अस्मदादीनां शरीरं पार्थिवम्, भौमाग्नीन्धनत्वात्, काष्ठवत्। न च घृतादिषु व्यभिचारः, तेषामपि गन्धवत्त्वेन पार्थिवत्वसिद्धेः।

यत्कैश्चिदतत्त्वज्ञैः 'शरीरमेवात्मा' इत्युक्तम्, तदस्मदादीनां शरीरमिति व्यधिकरणोपदेशेन निराकृतम्। तस्मादस्थिरे शरीरे न विद्वद्भिः ममता कार्या। यत उक्तम्—

"प्रचण्डपवनोद्धूतघनाघनविनश्वरम्।
शरीरमात्मनो भिन्नं ममता तत्र वर्जयेत्॥" ॥ १३ ॥

द्वितीयभेदमाख्याति—

**इन्द्रियं गन्धव्यञ्जकम् ॥ १४ ॥**

गन्धस्य घ्राणस्य गुणस्य व्यञ्जकं प्रकटीकारकारणं यदिन्द्रियं तत्पार्थिवम्। तत्प्रतीतौ प्रमाणमिदम्—'गन्धज्ञानं कुतश्चिदसाधारणकारणादुत्पन्नं, कार्यत्वात्, घटवत्। न चात्र नक्राद्यधिष्ठानं तत्कारणम्, उपहतेन्द्रियस्यापि तद्दर्शनात्। कारणं च अन्वयव्यतिरेकाभ्यामवधृतसामर्थ्यमेव तावत्। न च मनः करणम्, तस्य रूपादिप्रतीतावपि साधारणत्वात्। ततो यदिन्द्रियं तत्करणं तत् पार्थिवम्। तत्रानुमितिर्यथा—विमतो गन्धो गन्धवदभिव्यञ्जकाभिव्यक्तो गन्धत्वात्, घृताभिव्यक्तकुङ्कुमगन्धवत्; इति गन्धवत्त्वसिद्धौ घ्राणेन्द्रियं पार्थिवं, गन्धवत्त्वात्, पुष्पवत्।

ननु इन्द्रियाणामभौतिकत्वा[त्] पार्थिवत्वं घ्राणेन्द्रियस्य भस्मोपरिप्रलेपप्रायमिति

१ देव ऋषि अ. २.। २ पृथग्विभक्तिकरणेन. अ. १ पा टि.। ३ गन्धज्ञान अ. १. पा. टि. १७.। ४ विवादोपपन्नः आधुनिको वा अ. १. पा. टि.।

चेत्; न, बाह्येन्द्रियाणि प्राप्यकारीणि, व्यवहिताऽप्रकाशकत्वात् प्रदीपवदिति। तत्सिद्धेरिति ॥ १४ ॥

तृतीयं भेदं प्राह—

**विषयो घटादिः ॥ १५ ॥**

शरीरेन्द्रियाभ्यां व्यतिरिक्तं जीवस्य भोगनिमित्तं वस्तु स 'विषयः'। स क इत्याह 'घटादिः'। 'घटः' पृथुबुध्नोदराकारः कुम्भापरपर्यायो लोके व्यवह्रियमाणः पदार्थः। 'आदि'शब्दाद् वनस्पतिपाषाणकाष्ठमृत्तिकादीनां परिग्रहः ॥ १५ ॥

प्रथमद्रव्यं पृथिवीलक्षणं प्रभिद्य द्वितीयमाह। आपो भिनत्ति—

**आपोऽपि परमाणुलक्षणाः कार्यलक्षणाश्च ॥ १६ ॥**

'आपः' पानीयवाचकं बहुवचनान्तं स्त्रीलिङ्गमेव। जलस्य नामैतद्वर्तते। 'अपि'शब्दः पूर्वस्याः पृथिव्या भेदैः सह समानताख्यापनार्थः। तथा च न केवलं पृथिव्येव परमाणुलक्षणेत्यादिभेदभिन्ना, किन्त्वाऽऽपोऽपि तथैवेत्यर्थः ॥ १६ ॥

किं स्वरूपास्ताः परमाणुलक्षणाः किंस्वभावाश्च कार्यलक्षणा इत्याशङ्क्याह—

**परमाणुलक्षणा नित्याः कार्यलक्षणास्त्वनित्याः ॥ १७ ॥**

व्याख्या पूर्ववत् ॥ १७ ॥

**ता अपि शरीरेन्द्रियविषयरूपाः ॥ १८ ॥**

परमाणुलक्षणानामपां विशेषाणामानन्त्येन वक्तुमशक्यत्वात् प्रभेदानां चावर्तमानत्वात् प्रथमभेदमवगम्य द्वितीयभेदं भिनत्ति। रूपशब्दस्य सर्वत्रापि सम्बन्धः पूर्ववत्। ता अपि कार्यलक्षणा आपोऽपि शरीररूपा इत्यादित्रिप्रकारा भवन्ति ॥ १८ ॥

तदाप्यं शरीरं क्वास्तीत्याह—

**शरीरं वरुणलोके ॥ १९ ॥**

नन्वपां सर्वथा द्रवरूपत्वेन तदारब्धं शरीरं नोपभोगादिसमर्थं स्यात्, जलबुद्बुदवद् इति चेत्; न, तत्र पार्थिवावयवानामुपष्टम्भकत्वात् पार्थिवावयवसंयोगेन प्रतिबद्धे द्रवत्वे आप्यावयवारब्धमपि शरीरं विशिष्टभोगसमर्थं भवतीति ॥ १९ ॥

---

१ आपोऽपि द्विविधाः नित्याश्च क । आपो नित्या अनित्याश्च नि. । २ नित्यजललक्षणमः अ. १. पा. टि । ३ तेनारब्धं तदा ..अ. १ पा. टि. । ४. जलेऽमरशरीरे. अ. १. पा. टि. ।

द्वितीयभेदमाप्यमिन्द्रियमाह—

**इन्द्रियं रसव्यञ्जकम् ॥ २० ॥**

आप्यम् 'इन्द्रियम्' 'रसस्य' रसनेन्द्रियग्राह्यस्य गुणस्य 'व्यञ्जकम्' प्रतीतिकरणम्, अर्थात् रसनेन्द्रियम् । तस्याऽऽप्यत्वे प्रमाणमिदम्—रसनेन्द्रियमाप्यम्, भौतिकत्वे सति पृथिवीपावकपवनाकाशानन्तर्गतत्वात् समुद्रादिवत् । न चाऽत्र विशेषणाऽसिद्धिः, बाह्येन्द्रियत्वेन तत्सिद्धेः समर्थितपूर्वत्वात् । विशेष्यसिद्धिः पुनरेवम्—रसनेन्द्रियं पृथिव्यादिचतुष्टयान्तर्गतं न भवति, इन्द्रियत्वे सति रूपगन्धस्पर्शशब्दाव्यञ्जकत्वात्; यन्नैवं न तदेवं । यथा घ्राणादि इति ॥ २० ॥

विषयस्वरूपं निरूपयति—

**विषयः समुद्रादिः ॥ २१ ॥**

शरीरेन्द्रियाभ्यां व्यतिरिक्तं भोक्तुर्भोगनिमित्तं यत् शीतस्पर्शं वस्तु स 'विषयः' । स क इत्याह 'समुद्रादिः' । समुद्रः प्रतीत एव । 'आदि'शब्दात् सरित्-सरोवर-कूपादिपानीयानि द्व्यणुकादिक्रमेणारब्धानि गृह्यन्ते । न तु विषयशब्देनाऽत्र पूर्वत्रोत्तरत्रापि प्रतीतिगोचरत्वं ग्राह्यम्, तस्य कार्यव्यतिरिक्तेषु परमाणुष्वपि सम्भवात्; इह तु कार्यलक्षणानामेवापां भेदानां प्रस्तुतत्वादिति ॥ २१ ॥

तृतीयद्रव्यभेदान् व्यनक्ति—

**तेजोऽपि नित्यमनित्यं च ॥ २२ ॥**

'च'शब्दोऽनुगमार्थः ॥ २२ ॥

किं नाम नित्यं किञ्चानित्यमित्याह—

**परमाणुरूपं नित्यं कार्यरूपमनित्यम् ॥ २३ ॥**

'रूप'शब्दः स्वभावार्थः । शेषं कृतव्याख्यानम् ॥ २३ ॥

द्वितीयप्रकारं भिनत्ति—

**तदपि शरीरेन्द्रियविषयरूपम् ॥ २४ ॥**

---

१ रसव्यञ्जकं रसनम् क । २ रसनेन्द्रिय पृथिव्यादिचतुष्टयान्तर्गतं न भवति इति न । एतावता पृथिव्यादिचतुष्टयान्तर्गत भवति, रसनेन्द्रियस्य इन्द्रियत्वे सति रूपगन्धस्पर्शशब्दाव्यञ्जकत्वं, न रूपगन्धस्पर्शशब्दव्यञ्जकं भवतीत्यर्थः, यथा घ्राणादि अ. १. पा टि. । ३ सरित्समुद्रादिः क;नि. । ४ ज्ञानविषयत्व विषयशब्देन न ज्ञेयम् अ. १. पा. टि. । ५ विषयस्य अ १ पा टि. । ६ परमाणुलक्षण. क;नि । ७ कार्यलक्षणम् क;नि ।

'तदपि' कार्यरूपं त्रिप्रकारम् ॥ २४ ॥

तत्राद्यं शरीरं क्वास्तीत्याह—

शरीरमादित्यलोके ॥ २५ ॥

ननु तस्य शरीरस्य तैजसत्वेन दहनात्मकत्वापत्त्या नोपभोगादिसामर्थ्यं स्याद्, अङ्गारादिवद् इति चेत्, न, पार्थिवावयवानां तदुपष्टम्भकानामङ्गीकारात् ॥२५ ॥

द्वितीयप्रकारं प्रकाशयति—

इन्द्रियं रूपव्यञ्जकम् ॥ २६ ॥

'रूपस्य' शुक्लपीतनीलादिभेदभिन्नस्य 'व्यञ्जकम्' प्रकाशकं यद् 'इन्द्रियम्' अर्थाच्चक्षुस्तैजसम्। तत्र प्रमाणम्—चक्षुस्तैजसम्, रूपादिषु मध्ये रूपमात्रप्रकाशकत्वात्, प्रदीपवत्। न च तेजसां दहनात्मकत्वात् चक्षुः स्वाश्रयं दह्यात् नापि प्राप्यकारित्वेन, यत्र प्रकाशकत्वेन प्राप्तं तत्काष्ठादिवस्तु प्रज्वालयेत्, प्राणिनामदृष्टवशेन अनुद्भूतस्पर्शस्यैवोत्पादात्। यथा प्रदीपालोकः प्राणिनामदृष्टवशेन अनुद्भूतस्पर्श एवारभ्यते। ततो न स्वप्रकाश्यं दहतीति।

ननु चक्षुस्तैजसं न भवति, अप्राप्यकारित्वान्मनोवत्। न चात्र हेतोरसिद्धिः; चक्षुरप्राप्यकारि, व्यवहितस्यापि प्रकाशकत्वान्मनोवत्। न चाऽत्र व्यवहितस्यापि प्रकाशकत्वं न सिद्धं काचकुंथ(कुम्प)क स्फटिकश(शि)ष्पलादिव्यवहितस्य निर्मलसलिलादेः पदार्थसार्थस्य प्रकाशादर्शनात्। अथ चक्षुः प्राप्यकारि, बाह्येन्द्रियत्वाज्जिह्वावत् इति सत्प्रतिपक्षत्वं ब्रूवे। तन्न, किमिदं बाह्येन्द्रियत्वं नाम? बाह्यार्थग्राहकत्वं वा, बाह्यकारणजन्यत्वं वा, बहिर्देशावस्थायित्वं वा? न तावदाद्यपक्षप्रक्षेपः, सरित्सरोवरप्रवरमन्दरमन्दिरादिग्राहकेन मनसि व्यभिचारात्। तथापि 'मनसा मेरुं गच्छति' इति लोकोक्तिः। नापि द्वितीयः, बाह्यपदस्य व्यवच्छेद्याभावेन हेतोर्व्यर्थविशेषणासिद्धिप्रसङ्गात्। व्यवच्छेद्यस्य मनसोऽप्यात्मनो बाह्येन पुद्गलेन जन्यमानत्वात्। नापि तृतीयः, बहिर्देशो विषयः, शरीरबहिर्भागो वा। आद्ये विषयाश्रितत्वम्, विषयोन्मुखी प्रवृत्तिर्वा? न तावद्विषयाश्रितत्वं, तस्य उभयवादिभ्यामनङ्गीकारात्। नापि द्वितीयः, विषयोन्मुख्याः प्रवृत्तेरस्माभिरनङ्गीकारेण हेतोः प्रतिवाद्यसिद्धेः। नापि शरीरबहिर्भागः, चक्षुषो रूपप्रतीतेः कारकस्य सर्वथाऽदृष्टत्वेन कुत्राप्यस्तीति सन्देहात् हेतोः संदिग्धव्यभिचारित्वात्। तस्मान्न बाह्येन्द्रियत्वं प्राप्यकारित्वं साधयति। यच्च प्राप्यकारित्वसाधनाय व्यवहिताप्रकाशकत्वाद् इत्युक्तं तदसम्बद्धं काचकुम्पकादिव्यव-

१ स्वप्रकाश्यम् अ. १. पा. टि.। २ आच्छादितस्यापि अ. १. पा. टि.।

हितस्यापि वस्तुनोऽवभासाद् हेतोरसिद्धतासम्बन्धबाधितत्वात्। यच्चावाचि चक्षुषस्तैजसत्वसाधनम्, तदपि सबाधनं रूप-चक्षुःसन्निकर्षेण रूपादिषु मध्ये रूपमात्रप्रकाशकेन व्यभिचारात्। द्रव्यत्वविशेषणाङ्गीकारे तु अञ्जनेऽनैकान्तात्। ततश्चक्षुरतैजसमेव, अभास्वररूपत्वान्मृद्वदिति।

अत्र[1] प्रतिसमाधिमिदध्महे—भवद्भिर्यदुक्तं चक्षुषोऽप्राप्यकारित्वं तन्न, कुड्यादिव्यवहितस्य सर्वथा प्रकाशकत्वाभावात्। यत्पुनः स्फटिककाचकुम्पादिव्यवधानेषु सत्स्वपि तदन्तर्गतस्यावभासः, स किल तत्संयुक्तभास्वरकतिपयतेजोऽवयवसहकृतैश्चक्षुःकिरणैः पार्थिवावयवाप्रतिहतैस्तदन्तःप्राप्तैरेव कृतः, न पुनरप्राप्तैः। अतः कथं व्यवहितत्वम्? अन्यथा सर्वत्रापि कथं न तदवभासः?

व्यवधानाव्यवधानयोरविशेषात्, योग्यताया नियामिकाया अवर्तनादिति चेत्। न, मलाविले काचकुम्पकादौ कथं न तदवभासः? तत्र योग्यता नास्तीति चेत्। केयं स्वेच्छाचारिता भवताम्? तत्र विद्यमानाऽपि योग्यता मलाविलत्वे कुत्र गतेति? अथैवं ब्रूषे[2]—चक्षुःकिरणानामन्तःप्रवेशे काचकुम्पकादौ छिद्रपातप्रसङ्गः, तैश्च जलबिन्द्वादि निःसरेदिति। तन्न, प्रदीपप्रकाशादेरप्यप्राप्यकारित्वप्रसङ्गात्। तस्यापि पूर्वं बहिर्वर्तमानस्यान्तःप्रवेशे छिद्रपातादिप्रसङ्गस्य तुल्यत्वात्। न चालोकं सहकारिणं विनैव तत्प्रत्ययः। न च काचकुम्पकान्तरे प्रकाशान्तरमस्ति।

नन्वालोकः सहकार्येव न भवति, योग्यतामात्रापेक्षत्वात् प्रत्ययस्य इति चेत्। न, महान्धकारप्रसारोपवरकोदरमन्तरापि कुतो न तदवभासः, एकमालोकमृतेऽपरेषां सर्वेषां प्रत्ययकारणानां यथावस्थितत्वात्? तस्माद्वाकचक्यावभासमानतेजोवयवसहकृतेन तदन्तर्गतेनालोकेन पानीयादेः प्रत्ययो जन्यते नान्यथैवेति।

किञ्च[3], न सूक्ष्माणां तेजोवयवानां छिद्रपातित्वं दृष्टम्, तप्तपाथसि तेजोवयवानां समागमेपि स्थाल्यादौ छिद्रपाताभावात्। तस्मान्न ते तेजोऽवयवा नियमेन प्रविशन्तः छिद्रपातका भवन्ति इति प्रसङ्गश्चङ्ग इति। यत्पुनः बाह्येन्द्रियत्वं विकल्पितं तत्र भवदुक्तविकल्पातिरिक्तस्यैव मनोव्यतिरिक्तेन्द्रियत्वस्याङ्गीकारः। तथा च न कोऽपि दोषपोषः। यच्चावाचि व्यवहिताप्रकाशकत्वे दूषणं तद् अनन्तरोक्तयुक्तिभिः पराभूतम्। यः पुनश्चक्षुषस्तैजसत्वसाधने रूपचक्षुःसन्निकर्षेण सह व्यभिचारो दर्शितः सोऽपि न सविचारः। प्रकाशकत्वं किल प्रकाशकरणत्वम्, तत्र सन्निकर्षे सम्भवति तथाव्यवहाराऽभावात्, अवा-

---

[1] रूपरसगन्धस्पर्शशब्देषु अ. १ पा. टि.। [2] प्रत्युत्तरं कथयामः अ. १ पा. टि.। [3] निश्चायिकायाः अ. १ पा. टि.। [4] पुनर्युक्त्यन्तरमाह अ. १ पा. टि.।

न्तरमेव च जायमानत्वात्। यथा पुरुषः कठोरधारेण वृक्षं छिनत्ति न तु कुठारवृक्षसन्निकर्षेणेति व्यवह्रियते, तथा प्रमाता चक्षुरादिना रूपपदार्थं प्रमिणोतीति, न तु चक्षू रूपसन्निकर्षेण। यथा वा वह्निना काष्ठादि दह्यते न पुनरवान्तरमेव जायमानया ज्वालया, तथा प्रमातेत्यादि। नाप्यञ्जनेऽनैकान्तिकः, तस्य चक्षुस्तीक्ष्णतामात्रोपयोगित्वात्। परम्परयाऽपि कारणत्वे प्रकाशकत्वाङ्गीकारे शरावसम्पुटस्यापि तत्प्रसङ्गः। न चैवं व्यवहारोऽस्ति, तस्मान्नाञ्जनं प्रकाशे कारणमिति। अत्रानुमितिर्यथा—रूपचक्षुःसन्निकर्षाञ्जने रूपप्रकाशे करणं न भवतः, अभास्वरत्वे सति अप्रमाणत्वात् घटादिवत्; अतैजसत्वाद्वा। पूर्वापरहेतू[1] न, जैन-वैशेषिकयोर्वादिप्रतिवादिनोरसिद्धौ। यच्चक्षुषोऽतैजसत्वेऽनुमानं तत्तस्याप्रत्यक्षत्वे भास्वरं रूपमभास्वरं वास्तीति सन्देहात् सन्दिग्धव्यभिचारित्वान्न साध्यसाधकम्। एवं युक्तयो वर्तन्ते। तत्त्वं पुनस्तत्त्वविदो विदन्तीति प्रकृतं प्रस्तूयते॥ २६॥

तृतीयभेदं विषयमाह—

**विषयो भौमदिव्यौदर्याकरजरूपः॥ २७॥**

'विषयः' आत्मोपभोगयोग्यश्चतुर्विधो भवति। तत्र भूमौ भवो 'भौमः'। स च काष्ठादिप्रज्वालको वह्निरुच्यते। दिवि गगने भवो 'दिव्यः'। स च सूरविद्युदादिः। उदरे जठरे भव 'औदर्यः'। स चाहारितस्याहारस्य मलरसधातुभावेन परिणामकारकः। आकरजः सुवर्णरूप्यादिरूपः आकरात् स्थानविशेषाज्जातः 'आकरजः'।

ननु सुवर्णादि तैजसं न भवति, आकरजत्वात्, लवणवत् इति चेत्। न, वज्राकरादिसमुद्भूतरत्नेषु तमस्युद्द्योतकरेषु व्यभिचारात्। रत्नेष्वपि न तैजसत्वमिति न वाच्यम्, विमतानि रत्नानि तैजसानि, अन्यप्रकाशानपेक्षप्रकाशत्वात्, प्रदीपवत्।

केचित् पुनरेवमाहुः—सुवर्णादि तैजसं न भवति, गुरुत्वात्, लोष्टवदिति। तदपि न सारम्, अङ्गारावस्थाग्नौ व्यभिचारात्। न तत्राग्निसमवेतं गुरुत्वं किन्तु पार्थिवकाष्ठेन्धनसमवेतमेव संयुक्तसमवायात् तत्रोपलभ्यते इति चेत्। तदत्रापि समानम्। सुवर्णादिषु प्राणिनामदृष्टवशेन पार्थिवावयवोपष्टम्भादनुद्भूतरूपस्पर्शेषु संयुक्तसमवायात् पार्थिवावयवगतं प्रतीयत इति। तस्माद् गुरुत्वं तत्रासिद्धम्।

सुवर्णस्य तैजसत्वसिद्धौ किं प्रमाणमिति चेत्? उच्यते—सुवर्णादि पार्थिवं न भवति, नैमित्तिकद्रवत्वे सत्यपि अत्यन्तमग्निसंयोगेनादह्यमानत्वात्। यत्पुनः पार्थिवं तन्नैमित्तिकद्रवत्वे सति अत्यन्तमग्निसंयोगेन दह्यते यथा घृतादि। न तथेदम्। तस्मात् पार्थिवं न

---

१ प्रकाशकत्वस्य अ. १ पा. टि.। २ हेतून् अ. २। ३ रसिद्धेः अ २। ४ विवादापन्नानि अ. १ पा. टि.। ५ पुण्यवशेन अ. १ पा. टि.। ६ सुवर्णादिषु अ. १ पा टि.।

भवत्येवेति केवलव्यतिरेकिणा हेतुना तस्य पार्थिवत्वनिषेधः । नाप्यं सुवर्णादि, सांसिद्धि-
कद्रवत्वरहितत्वात्। ततश्च सुवर्णादि तैजसम्, रूपवत्त्वे सति पार्थिवाप्यत्वरहितत्वादग्निवदिति
॥ २७ ॥

अथ चतुर्थद्रव्यवायुभेदान् व्यनक्ति—

**वायुरपि नित्योऽनित्यश्च ॥ २८ ॥**

'अपि'शब्दाद् यथा पृथिव्यादयो नित्यानित्यभेदाद् द्विविधास्तथा 'वायुरपि'
॥ २८ ॥

कोऽसौ नित्यः को वाऽनित्य इत्याह—

**परमाणुलक्षणो नित्यः कार्यरूपस्त्वनित्यः ॥ २९ ॥**

'लक्षण'-'रूप'शब्दयोः समानार्थताख्यापनार्थं द्वयोरुपादानम् ॥ २९ ॥

आद्यभेदस्य प्रभेदानामभावाद् द्वितीयं भिनत्ति—

**स च शरीरेन्द्रियविषयप्राणलक्षणः ॥ ३० ॥**

'स च' कार्यलक्षणो वायुः । 'लक्षण'शब्दस्य सर्वत्राभिसम्बन्धाच्छरीरलक्षण
इन्द्रियलक्षणो विषयलक्षणः प्राणलक्षणश्चतुर्विधो भवति ॥ ३० ॥

तत्राद्यं भेदं दर्शयति—

**शरीरं वायुलोके ॥ ३१ ॥**

स्थानविशेषे 'शरीरम्' भोगायतनं पार्थिवावयवोपष्टम्भाद् विशिष्टक्रियोपयोग्यं वायव-
मस्तीति एतदाप्यादिवायवान्तं शरीरमागमादेव प्रतीयते ॥ ३१ ॥

द्वितीयभेदमाह—

**इन्द्रियं स्पर्शव्यञ्जकम् ॥ ३२ ॥**

'इन्द्रियम्' प्रत्यक्षप्रतीतिजनकं 'स्पर्शस्य' स्पर्शनेन्द्रियमात्रग्राह्यगुणस्य 'व्यञ्जकम्'
प्रकटीकरणमर्थात् स्पर्शनेन्द्रियम्। तद्वायवम्। तत्र-प्रमाणम्, स्पर्शनेन्द्रियं वायवम्,
चक्षुरग्राह्यत्वे सति स्पर्शज्ञानानुमेयत्वात्, सम्प्रतिपन्नवायुवदिति। अस्यार्थः स्पर्शज्ञानानुमेयं
स्पर्शनेन्द्रियम्-यथा-स्पर्शज्ञानं करणसाध्यम्, क्रियात्वाच्छिदिक्रियावदिति । वायुरपि
स्पर्शज्ञानेनानुमीयते यथा-इदं स्पर्शज्ञानं स्पर्शवद्द्रव्यस्पर्शविषयम्, स्पर्शज्ञानत्वात् घटस्पर्श-
ज्ञानवत्। पृथिवीजलपावकानां चक्षुर्ग्रहणयोग्यत्वाद् विशेषणेन व्यवच्छेदः। परमाणुद्व्यणु-
कानां तदपरेषामाकाशादीनां विशेष्येणेति ।

---

१ स्वाभाविक अ. १ पा. टि । २ कार्यलक्षणोऽनित्यः क नि. । ३ कार्यरूपः क.
सोऽपि नि. ४ विलक्षणः अ. २ । ५ चवायव अ. २ । ६ प्रमाणस्य अ. १ पा. टि ।
७ चक्षुरग्राह्यत्वरूपेण अ. १ पा टि. । ८ स्पर्शज्ञानानुमेयत्वरूपेण विशेष्येण अ. १ पा. टि. ।

ननु वायुः प्रत्यक्ष एव, प्रत्यक्षस्पर्शवत्त्वात् घटवद् इति चेत् । न, स्पर्शनेन स्पर्शमात्रस्यैव ग्रहणं न पुनर्वायोः प्रत्यक्षद्रव्यस्य रूपवत्त्वाव्यभिचारेण रूपवत्त्वप्रसङ्गात् । न च वायू रूपवान् । वायुर्नीरूपः, प्रत्यक्षगुणत्वे सति चक्षुरग्राह्यत्वादाकाशवत् । कथं तर्हि 'वायुरयं वाति' इति कुतः प्रतीतिरिति चेत् ? तत्राभ्यासपाटवाद् व्याप्तिग्राहकप्रमाणनिरपेक्षमेव तत्कालमनुमीयते । यत्पुनस्तत्प्रत्यक्षत्वेऽनुमानमुपन्यस्तं तत् 'शीतो वह्निर्दाहकत्वाद्धिमवदिति'वदनुभवबाधितत्वात्कालात्ययापदिष्टम् । तस्माद्वायुरप्रत्यक्षोऽरूपद्रव्यत्वाद् गगनवदिति ॥ ३२ ॥

तृतीयं भेदमाख्याति—

**विषयस्तु वृक्षादिकम्पजनकः ॥ ३३ ॥**

'विषयः' भोक्तुर्भोगोपयोगी 'वृक्षादिकम्पः' पादपपदार्थक्रियाविशेषः, तस्य 'जनकः' निमित्तकारणम् । वृक्षादिकम्पेन च सोऽनुमीयते । यथा—वृक्षादिकम्पः स्पर्शवद्द्रव्यसंयोगजन्यः, विशिष्टकम्पत्वात् जलकल्लोलाहतपङ्कजादिकम्पवत् । विशिष्टशब्देन भूकम्पादि व्यवच्छिद्यते । न च तत्राकाशादयो हेतवोऽस्पर्शवद्द्रव्यत्वात् । न च पृथिव्यादयः, तदोपलभ्यमानस्पर्शास्पदस्य नीरूपत्वात् । अतस्तत्कम्पे यन्निमित्तं कारणं स वायुः ॥३३॥

चतुर्थं प्राणस्वरूपं निरूपयति—

**प्राणश्च शरीराभ्यन्तरचारी ॥ ३४ ॥**

'च'शब्देन न केवलं वायुः पृथिव्यादिवच्छरीरेन्द्रियविषयरूप एव किन्तु प्राणोऽपि तद्भेद इति दर्शयति । 'प्राणः' श्वासोच्छ्वासादिलक्षणः । शरीरं भोगायतनम् । तन्मध्ये गमनागमनकारी ॥ ३४ ॥

नन्वपानवायुस्तद्विपरीतत्वात् पञ्चमो भेदः किमिति नावादीत्याशङ्क्याह—

**स एव क्रियाभेदादपानादिसञ्ज्ञां लभते ॥ ३५ ॥**

'स एव' प्राणलक्षणो वायुरेव । एवकारः कार्यवायोर्निषेधयति । 'क्रियाभेदात्' सकृद्द्वारनिर्गमनादिलक्षणक्रियाविशेषादपानादिसञ्ज्ञां प्राप्नोति । आदिशब्दादुद्गारादि ॥ ३५ ॥

ननु विषयस्तु वृक्षादिकम्पजनको भोक्तुर्भोगयोग्य एवोक्तस्ततः स्तिमितवायुः पञ्चमो भविष्यतीत्याशङ्कां तिरस्करोति—

---

१ वृक्षादिकम्पे अ. १ पा. टि । २ प्राणस्तु क नि. । ३ निर्गमलक्षण अ. १ । ४ मुद्गरादि अ २ । ५ अत्र 'एवोक्तस्तस्तिमि' इति द्वयोरपि प्रत्योः पाठस्तथापि अर्थानुसन्धानं कृत्वा संशोधनं कृतम् ।

**स्तिमितवायुस्तु परमाणुसमूह एवानारब्धद्रव्य इति ॥ ३६ ॥**

'स्तिमितवायु' निश्चलवायु । सोऽनारब्धद्रव्य । आरब्ध स्वसमवेत कार्यरूपद्रव्य येन स तथाऽऽनारब्धद्रव्योऽनारब्धद्रव्य, परमाणूना समूहो निचय । एवकारेण प्रकारान्तरत्व निराकरोति। यथा बहुभिर्मृत्खण्डैरनारब्धैकगोलक पुञ्ज प्रमीयते तथाऽयमपि॥३६

स्पर्शवन्ति चत्वारि भूतान्युक्त्वा पञ्चमभूताऽऽकाशभेदान् दर्शयति—

**आकाशस्तु घटाकाशादिभेदभिन्नोऽनन्त एव ॥ ३७ ॥**

घटेन सह सयुक्त आकाश 'घटाकाश'। आदिशब्दात् पटाकाशादिभि प्रकारै मूर्तद्रव्यैर्भिन्नैर्भिन्नैरनन्तै सह सयोगोपाधिवशादेकोऽपि अनन्तभदभिन्न इत्युच्यते। यथैकोऽपि विपुलस्फटिको नीलपीतश्वेतादिवस्तुसनिकर्षोपाधिवशान्नीलपीतश्वेताद्याकारेणावभासते तथाऽयमपि ॥ ३७ ॥

अनुक्रमप्राप्त षष्ठ द्रव्य काल भिनत्ति—

**कालस्तु उत्पत्तिस्थितिविनाशलक्षणस्त्रिविधः ॥ ३८ ॥**

तत्र पदार्थाना जायमानता 'उत्पत्ति'। 'स्थिति' वर्तमानत्वम्। 'विनाश' प्रध्वस । तेषा निमित्तत्वोपाधिना कालस्यैकस्यापि त्रयो भेदा भवति। तथाहि–पदार्थस्योत्पत्ति कुर्वन् उत्पत्तिकाल इति व्यपदिश्यते, स्थितिनिमित्तत्वात्स्थितिकाल, विनाशनिमित्तत्वाद्विनाशकाल इति। यथैकोऽपि पुमान् नाटककरणान्नाटकी, पचनक्रियाकरणात्पाचक इति व्यपदिश्यते।

ननु पदार्थानामुत्पत्तिस्थित्यादिनिमित्तत्व कालस्य कुत ? सन्निधिवशाद इति चेत्, न, आकाशादीनामपि सन्निधेर्वर्तमानत्वात्। 'अमुष्मिन् काले जात' 'अमुष्मिन् काले विनष्ट' इत्यधिकरणत्वेन व्यपदिश्यमानत्वादिति चेत्, तदपि न सङ्गच्छते। 'गेहे जात' 'अटव्या जात' इत्यादिप्रकारेण गेहादीनामप्यनिमित्तानामप्यधिकरणत्वोपदेशात्। तस्मात् कालस्योत्पत्त्यादिनिमित्तत्व नोपपद्यत इति चेत्।

तदसत्, घटादिकार्योत्पत्तौ कारणकुलालादिनियमे सत्यपि कालविशेषे नियमादेव सर्वेषामुत्पत्तिदर्शनात्तस्य निमित्तत्वोपपत्ते। कालविशेषस्यानिमित्तत्वे सर्वकाल कारणानि कार्यं कुर्युरविशेषात्। उक्त च—

"काल करोति भूतानि काल सहरते तथा।" ॥ ३८ ॥

---

१ इति' कनि–पुस्तकयोर्नास्ति।

सप्तमद्रव्यस्य दिशो भेदान् दर्शयति—

**दिग् ऐन्द्री आग्नेयी याम्या नैर्ऋती वारुणी वायव्या कौबेरी ईशानी नागी ब्राह्मी रौद्रीत्येकादशविधा ॥ ३९ ॥**

एकेनाधिका दश । तावत्सङ्ख्या विधाः प्रकारा यस्याः सा तथा । इन्द्रस्येयमैन्द्री, इन्द्रो देवता अस्या इति वा 'ऐन्द्री' । सा च पूर्वा दिग् लोकव्यवह्रियमाणा गृह्यते । अग्नेरियमग्निर्देवताऽस्यामिति वा 'आग्नेयी' । सा च अग्निकोणकः । यमस्येयं 'याम्या' दक्षिणा दिगिति । नैर्ऋतो देवताऽस्यामिति 'नैर्ऋती' दक्षिणपश्चिमान्तरालवर्ती नैर्ऋतकोणक इति । वरुणस्येयं वरुणो देवताऽस्यामिति 'वारुणी' । सा च पश्चिमेति सञ्ज्ञान्तरा । समासः सर्वत्र पूर्ववदूह्यः । 'वायव्या' तु पश्चिमोत्तरयोरन्तरालवर्ती वायव्यकोणः । 'कौबेरी' उत्तरा दिग् । 'ईशानी' ईशानकोणकः पूर्वोत्तरयोरन्तरालवर्ती । 'नागी' अधोभागः । 'ब्राह्मी' ऊर्ध्वा दिग् । 'रौद्री' दशानामपि दिशां मध्यभाग इति । एतच्चादित्यस्य मेरोः परितः परिवर्तमानस्य संयोगविशेषोपाधिना एकस्या अपि दिशो भेदप्ररूपणमिति ॥ ३९ ॥

किमाकाशादीनां त्रयाणां भेदकथनं पृथिव्यादिवद् वास्तवं किं वोपाधिकृतमिति व्याख्यामश्रद्दधानस्य कस्यचित् सन्देहं पिनष्टि—

**आकाशादित्रयं वस्तुतस्त्वेकैकमेवोपाधिभेदान्नानाभूतम् ॥४०॥**

'आकाशादित्रयम्' आकाशकालदिग्लक्षणं 'वस्तुतः' स्वरूपाद् 'एकैकमेव' एकवसङ्ख्याधिकरणमेव, पूर्वोक्तभेदभिन्नं च 'उपाधिभेदात्' । तस्याकाशादित्रयस्य सत्त्वे यत्प्रमाणं तदग्रे लक्षणावसरे निरूपयिष्यामः । आकाशादीनां वास्तवैकत्वे प्रमाणमदः—कालदिशौ वास्तवैकभेदे, असमवेतभावत्वे सति नित्यं विशेषगुणानधिकरणत्वात् समवायवत् । असमवेतेति विशेषणेन कार्यद्रव्यगुणकर्मसामान्यविशेषाणां व्युदासः, अभावस्य च 'भाव'-शब्देन, शेषहेतुना तु परमाण्वात्ममनसामिति । समस्त-विशेषगुणोच्छेदेनैव मुक्तात्माकारान्मुक्तेन व्यभिचार इति चेत्; नित्यमिति पदेन तन्निषेधात् । नै ते नित्यं सर्वदा विशेषगुणानधिकरणं पूर्वं विशेषगुणानां बुद्ध्यादीनां तेष्वाश्रितत्वात् । आकाशमपि वास्तवैकभेदम्, अनात्मत्वे सति विभुत्वात्कालवत् ॥ ४० ॥

---

१ ऐशानी इति कनिपुस्तकेऽपि 'ईशानी' इति पादटिप्पणे । २ रौद्री च क, नि । ३ इति ऐन्द्री अ. २ । ४ अस्या इति अ. २ । ५ कोणिक अ. १ । ६ 'एशानी' क. । ७ त्रय तु वस्तुन एकमेव क. । ८ °ष्यामः । आकाशादीनां वास्तवैकत्वे प्रमाणमदः कालदिशो वास्तवस्यामशादित्रयस्य सत्त्वे यत् प्रमाण तदग्रे निरूपयिष्यामः आका° इति पाठः लेखकप्रमादवशात् समाविष्टः अ. १ प्रती । ९ वास्तवैकत्वे अ. २ । १० विशेषणोच्छेदेन अ. १ । ११ भाव । ते अ १ । १२ मुक्तात्मान. अ. १ पा. टि. ।

अथाष्टमद्रव्यमात्मानं भिनत्ति—

**आत्मा तु परमात्मा क्षेत्रज्ञश्चेति द्विविधः ॥ ४१ ॥**

कोऽसौ परमात्मा कोऽसौ क्षेत्रज्ञः । किं सङ्ख्याकः परमात्मा किं सङ्ख्याकश्च क्षेत्रज्ञ इत्याह—

**परमात्मा त्वीश्वर एक एव क्षेत्रज्ञा अस्मदादयोऽनन्ता एव ॥ ४२ ॥**

परम उत्कृष्टः सर्वज्ञः सर्वसामर्थ्यवान् सर्वदुःखरहित आत्मा 'परमात्मा' । 'तु'शब्दः क्षेत्रज्ञात्मनः सकाशाद्विशेषख्यापनार्थः । स चेश्वरो भूभूधरादिकर्तृत्वेनानुमित 'एक एव' । तस्य बहुत्वे विसदृशेच्छत्वैकस्य वस्तुनश्चिकीर्षा तदपरस्य नेति कदाचिदपि कार्योत्पत्तिर्न भवेत् । एकस्यैवेच्छां सर्वेऽप्यनुवर्त्तन्ते इति चेत् । तर्ह्येकस्यैव तस्येश्वरत्वं नापरेषां तदिच्छानुवर्तित्वाद् भृत्यवत् । वयमादयो येषां ते 'अस्मदादयः' । 'क्षेत्रज्ञाः' 'अनन्ताः' न विद्यतेऽन्तः पर्यवसानो(नं) गणनया येषां ते तथा; प्रजापतिदेवर्षिकीटिकाकुन्थुकपशुमनुष्यादयः सर्वेऽपि 'अस्मदादि'पदेन गृह्यन्ते ।

ननु मुक्तात्मा परमात्मा क्षेत्रज्ञो वा ? न परमात्मा, परमात्मनः ईश्वरादतिरिक्तस्य निषेधाभिधानात् । नापि क्षेत्रज्ञः समुच्छिन्नविशेषगुणमुक्तात्मनि बुद्धिगुणरहितत्वेन क्षेत्रं किञ्चिज्जानातीति क्षेत्रज्ञ इति व्युत्पत्त्या किञ्चिज्ज्ञत्वापरपर्यायस्य क्षेत्रज्ञत्वस्यासम्भवात् तस्मादयं तृतीयो भेदो वक्तव्य इति चेद् ।

उच्यते—शरीरसम्बन्धेन ज्ञानैवत्वं विवक्षितं न पुनः कस्यचिदुक्तव्युत्पत्तिमात्रात् किञ्चिज्ज्ञत्वं, मुक्तात्मनामपि शरीरेण पूर्वसम्बन्धे सत्येव ज्ञानवत्त्वात् । तेन तेषां क्षेत्रज्ञतेति । उभयत्रैवकारौ प्रकारान्तरत्वनिरासार्थौ ।

अत्रात्मैकत्ववादवादिनो वावदूका वदन्ति—ननु 'क्षेत्रज्ञा अस्मदादयोऽनन्ता एव' इति न मृष्यामहे श्रीजैनवत्त्वयौ शरीरमात्रव्यापकत्वानङ्गीकारात्, आत्मनो विभुत्वाभिधानाच्चानन्त्यप्रतिपादनस्याप्रामाणिकत्वात् । आत्मा विभुश्चेद् एक एव संगच्छते । तथाहि-विवादाध्यासितः आत्मा वास्तवैकभेदो विभुत्वादाकाशवत् । अथ तर्व मतम्—आत्मन एकत्वे एकत्र जनने सर्वशरीरोत्पत्तिरेव, विनाशे विनाश एव स्यात् । तन्न किञ्चित्, एकस्याप्याकाशस्य घटादिसंयोगोपाधिना एकस्य घटाकाशस्योत्पत्तावप्यपरस्य पटाकाशादे-

---

१ ईश्वर क नि । २ गुणनयां अ १ । ३ कीकिटिका. अ. १ । ४ विशेषण अ २ । ५ ज्ञानवत्त्व नाम किं ज्ञानात्यन्ताभावानधिकरणत्व, त्रैकालिकाभावो ज्ञानस्य योऽयं तस्यानधिकरणत्वं अनाश्रयत्व तद्विवक्षितम् अत्र अ. १ पा. टि. । ६ किञ्चिदज्ञत्व अ. १ । ७ त्वयाऽशिवरीर अ २ । ८ त्वाभिप्रायः अ. १ पा. टि. ।

विनाशस्यापि सम्भवात्। न चाकाशे उत्पत्तिविनाशौ वास्तवौ स्त इति चेत्। अत्रापि समानम्। न च—एकस्य सुखित्वे सर्वत्र सुखित्वप्रसङ्गो दुःखित्वे तथात्वस्य—इति वाच्यम्, एकस्यापि नभसः सुरनारिशब्दाधिकरणत्वेन मधुरगुणत्वस्य तत्कालमेवान्यत्र गर्दभशब्दाधिकरणत्वेन कठोरगुणत्वस्य च युगपदुपलम्भात्। तस्मादेक एव ब्रह्मस्वरूप आत्मेति सुस्थितम्। उक्तं च—

"एक एव हि भूतात्मा भूते भूते व्यवस्थितः।
नानोपाधिवशान्नाना दृश्यते जलचन्द्रवत्॥"

तथा च श्रुतिः—"एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन।"

तत्राभिधीयते—नन्वात्मन ऐक्येऽन्यशरीरेऽनुभूतोऽर्थोऽन्यशरीरात्मना कुतो न स्मर्यते? शरीरभेदादिति चेत्, तर्हि बालशरीरानुभूतोऽर्थोऽपि वृद्धशरीरात्मना 'अहं बाल्ये सुखमभुवम्' 'मयैव दृष्टमासीत्' इत्यादिप्रकारेण कथं स्मर्यते, शरीरभेदस्य तत्रापि वर्त्तमानत्वात्? एकमेव शरीरं बालवृद्धवयोवस्थायीति चेत्, न, बालशरीरं वृद्धशरीरं भिन्ने, भिन्नपरिमाणोपेतत्वात् घटशरावव[त्] इति भेदावगमात्।

आत्मऽनेकत्वे प्रमाणमदः—विमतानामेतेषां शरीराणां भोक्ता एको न भवति, संस्काराव्यवच्छेदे अन्यशरीरानुभूतास्मारकत्वात्। योऽनेकशरीराणामेको भोक्ता सोऽन्य शरीरानुभूतस्मारको दृष्टो यथा बालवृद्धशरीरावस्थायी अहमितिप्रत्ययगम्यो मानसप्रत्यक्षो मदात्मेति केवलव्यतिरेकिणा हेतुना भेदसिद्धिरिति।

यः पुनरात्मैकत्वे 'विभुत्वाद्' इत्युक्तो हेतुः स भेदे प्रमाणभावोपाधिना बाधित इति न साध्यसाधकः। यच्च श्रुतिवचनमैक्यख्यापकमुक्तं तदपि न, अभिप्रायापरिज्ञानादेव। इह लोके एकमेवाद्वितीयं ब्रह्म न, किन्तु किञ्चन नानाऽनेकप्रकारमस्तीति प्रामाणिकव्याख्यानान्न श्रुतिविरोधः॥ ४२॥

अथ प्रकृतमनुसन्धीयते। अथ नवमद्रव्यस्य मनसो भेदानभिदधाति—

**मनांसि प्रत्यात्मनिष्ठत्वादनन्तान्येव॥ ४३॥**

आत्मानमात्मानं प्रति प्रत्यात्मं, तत्र निष्ठत्वं विशिष्टसंयोगित्वम्, न समवेतत्वम्, नित्यद्रव्याणां क्वचित्समवायाभावात्। नापि संयोगमात्रं सर्वात्मना विभुत्वेन समस्तमूर्त्तसंयोगित्वात् समस्तमनसां सर्वात्मभिस्तुल्ययोगित्वात् 'इदं मनोऽस्यात्मनः' इति व्यवस्थाया अभावप्रसङ्गात्। तस्माददृष्टवशात् प्रतिनियतात्मनि सर्वविषयप्रतीतिहेतुना मनसा

---

१ °रात्मा अ. १। २ चेत्। बाल अ. १। ३ मनस्तु प्रत्यात्मनिष्ठत्वादनन्तम् क, नि.। ४ एकैकात्मनि अ १ पा. टि.।

  

संयोगविशेषो निष्टत्वं विशिष्टसंयोगत्वं वा, तस्मान्मनांसि अनन्तानि, प्रत्यात्मनिष्टत्वात्
शरीरवत्। न च हेतोरसिद्धिः, मनांसि प्रत्यात्मभिन्नानि, सर्वविषयज्ञानोत्पादकत्वात्
शरीरवत्; इन्द्रियत्वाद्वा, चक्षुर्वत्।

मनःसत्त्वे प्रमाणम्—सुखादिप्रतीतिः करणसाध्या, क्रियात्वाच्छिदिक्रियावत्। न च तत्र
चक्षुरादीनामवकाशोऽस्ति तेषामनात्मविषयत्वात्, तस्माद्यत्तत्र करणं तन्मन इति ॥ ४३ ॥

एतानि नवापि द्रव्याणि प्ररूप्य यानि नित्यानि चानित्यानि तानि दर्शयति—

## आकाशादिपञ्चकं नित्यमेव, अपरं नित्यानित्यम् ॥ ४४ ॥

आकाश-काल-दिगात्मनो लक्षणं 'पञ्चकम्' 'नित्यमेव' अविनाश्येव। प्रमाणं चात्र—
आकाशादिपञ्चकं नित्यम्, निरवयवद्रव्यत्वात्, परमाणुवत्। एवकारः—आकाशादिपञ्चकं
नित्यमेव, नानित्यमिति निर्धारणार्थः। 'अपरम्' आकाशादिपञ्चकाद् व्यतिरिक्तं पृथिव्यप्तेजो-
वायुलक्षणं चतुष्टयं 'नित्यानित्यम्'। परमाणुलक्षणं नित्यं कार्यलक्षणं द्व्यणुका-
द्यनित्यम् ॥ ४४ ॥

एवं नवानामपि द्रव्याणां भेदानभिधाय नित्यानित्यविभागं च संसूच्य द्वितीय-
पदार्थस्य चतुर्विंशतिभेदभिन्नस्य गुणस्य भेदानभिदधानोऽतिस्पष्टतरप्रतीतिजनकचक्षुर्मात्र-
ग्राह्यत्वेन पूर्वमुपन्यस्तं रूपं भिनत्ति—

## रूपं सित-लोहित-हरित-कपिल-पीत-कृष्ण-चित्रभेदात्सप्तविधम् ॥४५॥

'रूपम्' वक्ष्यमाणलक्षणं सप्तप्रकारं भवतीति शेषः। तत्र 'सितं' शुक्लापरपर्यायं
क्षीरनीरडिण्डीरहीरादिषु वस्तुषु प्रतीयमानं गृह्यते। 'लोहितं' रक्तं विद्रुमद्रुमपल्लवादिगतम्।
'पीतं' हरिद्रादिषूपलभ्यमानम्। 'कृष्णं' कालमञ्जनादिषु समवेतम्। 'हरितं' नीलं हरित्का-
यादिवर्णः। 'कपिलं' कपिला गौरित्यादिप्रकारेणोन्मीयमानम्। 'चित्रम्' अनन्तरोक्तैः
षड्भी रूपैरसमवायिकारणत्वेनारब्धं चित्रपटादिगतं रूपमिति। अत्र केचित्—

"एकं चेत्तत्कथं चित्रं चित्रं चेदेकता कुतः।
एकं च तच्च चित्रं चेत्येतच्चित्रकरं वचः॥"

---

१ नित्यानित्य ब क। अन्यन्नित्यमनित्यं नि। २ सित-लोहित-पीत-कृष्ण-हरित-कपिश-चित्रभेदात् क. नि.। जिनवर्धनीकमस्तु सित-लोहित-पीत-कृष्ण-हरित-कपिश-चित्र इति। ३ चेन्मता अ. २।

इत्याहुः । तन्न किञ्चित्, प्रमाणोपलब्धस्य व्यपोढुमशक्यत्वात् । प्रतीयते च चित्ररूपम् । अनेकानि रूपाण्येवैकत्र चित्राकारेण प्रतीयन्ते इति चेत्; न, चित्रपटादि एकरूपाधिकरणं चक्षुर्ग्राह्यत्वात्, क्षीरादिवत् इत्यनेन तद्गतरूपस्यैक्यसिद्धेः । न च तत्र केवलं सितं रूपम्, तस्यैव केषुचिदवयवेषु कालादिवर्णानामप्यवभासाद् । तत्तदवयवगतानि विलक्षणानि रूपाणि सितादीन्येव प्रतीयन्ते, न पुनश्चित्रं नाम रूपान्तरमस्तीति चेत्; न, तदभावेऽवयविनो नीरूपत्वप्रसङ्गः । तथा च नीरूपद्रव्यत्वाच्चक्षुरग्राह्यत्वप्रसङ्गः । गृह्यते च 'चित्रपट एषः' इत्युल्लेखेनाऽवयवी । तस्मात्तत्रैकं चित्ररूपमस्तीति स्थितम् ॥ ४५ ॥

रूपेण समानभेदत्वात्तदनन्तरमुपन्यस्तस्य रसस्य द्वितीयगुणस्य भेदानाविःकरोति—

## रसोऽपि मधुर-कटु-तिक्त-कषायाम्ल-लवण-चित्रभेदात् सप्तविधः॥४६॥

'रसः' रसनया गृह्यमाणो गुणः । 'अपि'शब्दो यथा रूपं भेदवत् तथा रसोऽपि भेदभिन्न इति समानताख्यापनार्थः । एवं पूर्वत्र यथा स्वकीयपूर्वतनपदार्थेन तुल्यत्वसूचनार्थोऽपिशब्द 'आपोऽपि' इत्यादिषु, तथोत्तरत्र 'गन्धोऽपि' इत्यादिष्वपिशब्दादयमेवार्थो ज्ञेयः। स सप्तप्रकारो भवति । तत्र 'मधुरः' मिष्टः । 'कटुः' निम्बकाथादिगतः । 'तिक्तः' तीक्ष्णो राजी-विश्वादिगतः । 'कषायः' बब्बूलवृक्षादित्वगादिसमवेतः । 'अम्लः' बीजपूरादिष्वास्वाद्यमानः । 'लवणः' लवणादिषु उन्नीयमानः क्षाराऽपरपर्यायः । 'चित्रः' किञ्चन मधुरत्वेन किञ्चित् तिक्ताकारेण प्रतीयमानः सुधादिषु हरीतक्यादिषु च समवेतो रस इति । चित्ररसैक्यं च पूर्वोक्तयुक्तिभिः साधनीयमिति ॥ ४६ ॥

पृथिव्यप्तेजसां विशेषगुणं रूपं निरूप्य पृथिव्यबृनिष्ठं रसं च विभज्य पृथिवीमात्रनिष्ठं गन्धं विभजते—

## गन्धोऽपि द्विविधः ॥ ४७ ॥

'गन्धः' घ्राणेन्द्रियेणाऽऽघ्रायमाणो गुणः । द्वे विधे प्रकारौ यस्य स द्विविधः ॥४७॥ तावेव दर्शयति—

## सुरभिरसुरभिश्च ॥ ४८ ॥

तत्र 'सुरभिः' मिलदलिकुलव्याकुलबहुलपरिमलपटलकलितनलिनोदलान्तर्वर्तमानहंससकाशकाचकर्पूरपूरकस्तूरिकादिषु वस्तुषु जेत्रीयमाणो गन्धोऽभिधीयते । 'च' पुनः

---

१ निराकर्तुम् अ. १ पा. टि. । २ रूपस्यैक्यसिद्धेः अ. १ । ३ चित्रपटे अ. १ पा.टि. । ४ वर्ति अ. २ । ५ हास. अ. २ ।

'असुरभिः' पृथ्व्यादिसमवेत इति ॥ ४८ ॥

प्रत्यक्षगुणेषु चतुर्षु द्रव्येषु वर्तमानं चतुर्थं गुणं स्पर्शं भिनत्ति—

**स्पर्शः शीतोष्णानुष्णाशीतभेदात् त्रिविधः ॥ ४९ ॥**

'स्पर्शः' स्पर्शनेन्द्रियेण प्रतीयमानः 'त्रिविधः' भवति । कुतस्त्रैविध्यम् ? 'शीतोष्णा-
ऽनुष्णाशीतभेदात्' । तत्र शीतस्पर्शः पानीये । उष्णस्पर्शस्तेजसि । न उष्णः अनुष्णः,
न शीतोऽशीतः, अनुष्णश्चाशीतश्चानुष्णाशीतः । स च पृथिव्यां वायौ च प्रतीयते । तत्र
शीतोष्णौ यौ कदाचित् प्रतीयेते तौ संयुक्तसमवायादेव, न पुनः समवेतौ ते तत्रेति ।
ननु उष्णो न भवति तदा शीतो भवत्येव, न शीतश्चेदुष्णो भवत्येवेति द्वयोः पर-
स्परविरुद्धत्वात् कथमनुष्णाशीतः स्पर्शः सम्भवति इति चेत्; न, परस्परविरुद्धयोरेकस्या-
भावेऽपरसद्भावानान्तरीयकत्वाभावात् स्थलादौ जलानलयोः सहैवाऽभावदर्शनात् ॥४९॥

एवं विशेषगुणान् विभज्य सामान्यगुणानां भेदमभिदधानः पूर्वं सङ्ख्यायाः
सङ्ख्यामाह—

**सङ्ख्यापि एकत्व-द्वित्व-बहुत्वभेदात् त्रिविधा ॥ ५० ॥**

'सङ्ख्यापि' त्रिप्रकारा स्यात् । कुतः ? एकत्वेत्यादेः । एकत्वसङ्ख्या यथा
एकोऽयं पुरुषः, एकमाकाशमित्यादिप्रत्ययजनयित्री । द्वित्वबहुत्वसङ्ख्ये पुनरपेक्षाबुद्धिजनिते
एव । यथा द्वाविमौ पुरुषौ । द्वाभ्यामधिका त्रि-चतुः-पञ्चादिका यावद्गणनां कर्तुं पार्यते
सा सर्वाऽपि बहुत्वान्तर्गता यथा बहवः पुमांसः ।

अत्र सार्वदिकी एकत्वसङ्ख्या एव स्वसमवायिकारणगतैकत्वसङ्ख्यातः समुत्पन्ना
वर्वर्ति । द्वित्वबहुत्वसङ्ख्ये तु अपेक्षाबुद्धिरचितत्वात् कियत्कालभाविनी एव न सार्वदिकी ।
द्वयोर्बहूनां वा भिन्नत्वेन विवक्षया एकत्वस्यैवावशिष्टत्वात् ॥ ५० ॥

द्वितीयसामान्यगुणभेदानाविःकरोति—

**परिमाणमणु-महद्-दीर्घ-ह्रस्वभेदाच्चतुर्विधम् ॥ ५१ ॥**

एकम् 'अणु' अतिस्तोकं विस्तारे परमाणुद्व्यणुकनिष्ठम् । द्वितीयं 'महत्परिमाणं'
त्र्यणुकाद्याकाशादिनिष्ठम् । तृतीयं 'दीर्घपरिमाणं' उच्चैस्तरता त्र्यणुकाद्याकाशादिवस्तु-
निष्ठम् । चतुर्थं 'ह्रस्वपरिमाणम्' अतिनीचैस्तरता परमाणुद्व्यणुकनिष्ठम् ।
ननु अणु-ह्रस्वे परमाणुनिष्ठे महद्दीर्घे त्र्यणुकादिनिष्ठे । तत् किमिति परिमाणद्वयं
नोक्तम् अणुमहदिति ?—परमाणुनिष्ठमणुपरिमाणं त्र्यणुकाद्याकाशपर्यन्तेषु वस्तुषु वर्तमानं

१ स्पर्शस्तु क नि । २ सङ्ख्या एकत्व क नि. । ३ विविधम् क ।

महत्परिमाणमिति? । सत्यम्, अणुत्वं विस्तारे तुच्छत्वम्[1], ह्रस्वं प्रलम्बत्वे तुच्छम्, महद् विस्तारेऽधिकं, दीर्घं प्रलम्बत्वेऽप्यधिकम् । येऽप्येते[2] घटादिषु अणुह्रस्वादिव्यवहाराः तेऽप्यौपचारिका एव । परमार्थतः अणुह्रस्वे परमाणुष्वेव द्व्यणुकेषु वा । लोकेऽपि[3] अणुषु ह्रस्वमानीयतां, महत्सु दीर्घमानीयताम् इत्यादि अणुह्रस्वत्वयोः दीर्घमहत्त्वयोश्च भेदोपलम्भात चतुर्विधत्वमेव, न द्वैविध्यम् ॥ ५१ ॥

अथ तृतीयं सामान्यं गुणं भिनत्ति—

**पृथक्त्वमेकाऽनेकवृत्ति ॥ ५२ ॥**

पृथक्त्वं द्विविधं भवतीति अर्थाद् गम्यते । कथम्? एकम् 'एकवृत्ति', द्वितीयं च 'अनेकवृत्ति' । तत्रैकवृत्ति यथा पूर्णकलशोऽयमितरेभ्यो घटपटादिभ्यो भिन्नो विलोक्यते । तथा अनेकवृत्ति यथा एतौ कलशौ इतरेभ्यो भिन्नौ, एते चेतरेभ्यो भिन्नाः । एकस्मादतिरिक्तस्यानेकत्वाद् अनेकवृत्तिपृथक्त्वं द्विपृथक्त्वं बहुपृथक्त्वं च भवति । तच्चापेक्षाबुद्धिजनितमेव, न सार्वदिकं भिन्नत्वेन विवक्षया एकवृत्तिपृथक्त्वस्यैवावस्थानावलोकनात् ॥५२॥

अथ चतुर्थं सामान्यगुणं भिनत्ति—

**संयोगो द्विविधः ॥ ५३ ॥**

संयोजनं 'संयोगः' द्वयोः स्वावयवव्यापिनोः पृथग्भूतयोर्मेलनम् । स द्विविधो भवति ॥ ५३ ॥

द्वैविध्यमेव दर्शयति—

**कर्मजो विभागजश्चेति ॥ ५४ ॥**

कर्मणा उत्क्षेपणादेर्जातः 'कर्मजः' । स च प्रयत्नचालितयोस्तौलिकादिनिमित्तहस्ताद्योर्द्वयोर्द्रव्ययोर्बहूनां मीलने वा भवति । संयोगादुक्तस्वरूपाज्जातः 'संयोगजः' । यथा हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगः । न हि शरीरं पुस्तकेन सह संयुक्तं साक्षादस्ति । परम्परया संयोगोऽस्ति स संयोगजः संयोग इति ॥ ५४ ॥

अथ पञ्चमं सामान्यगुणं विभजते—

**विभागो द्विविधः ॥ ५५ ॥**

विभजनं 'विभागः', संयुक्तयोर्द्वयोर्द्रव्ययोः पृथक्करणम् ॥ ५५ ॥

---

१ तुच्छ अ. २ । २ यद्येते अ. २ । ३ लोकेऽपि अ. २ । ४ गोऽपि क नि ।
५ तालादि अ २ । ६ गोऽपि क नि ।

सोऽपि द्विधा भवति—

**कर्मजो विभागजश्चेति ॥ ५६ ॥**

तत्र 'कर्मजः' यथा हस्तपुस्तकविभागः । 'विभागजः' यथा हस्तपुस्तकविभागात् कायपुस्तकविभाग इति ॥ ५६ ॥

एवं मूर्त्तामूर्त्तवृत्तीन् सामान्यगुणान् विभज्य, अथ मूर्त्तमात्रवृत्ती सामान्यगुणौ भिनत्ति—

**परत्वमपि कालकृतं दिक्कृतं च, अपरत्वमपि कालकृतं दिक्कृतं च ॥५७॥**

परत्वमपरत्वं च द्विभेदं भवति । एकं 'कालकृतम्' कालेन निमित्तीभूय कृतं कालकृतम्, दिशा निमित्तीभूयकृतं 'दिक्कृतम्' । कालकृतं परत्वं च यथा वयसा स्थविरे पुरुषे 'परोऽयम्' इति प्रत्ययनिमित्तं, बालके 'अपरोऽयम्' इति प्रत्ययनिमित्तमपरत्वम् । दिक्कृतपरत्वापरत्वे यथा दूरस्थे वस्तुनि 'परमिदम्' इति प्रत्ययनिमित्तं परत्वं तथा अदूरे वस्तुनि अपरमिति प्रत्ययनिमित्तमपरत्वम् ॥ ५७ ॥

इति सामान्यगुणान् विभज्य आत्मविशेषगुणमध्ये प्रकाशरूपं बुद्धिगुणं विभजते—

**बुद्धिरपि स्मृतिरनुभवश्च ॥ ५८ ॥**

बोधनं 'बुद्धिः' ज्ञानं पदार्थपरिच्छेद इत्यर्थः । सा च द्विविधा भवतीति गम्यते— 'स्मृतिरनुभवश्च' । तत्र स्मरणं 'स्मृतिः' पूर्वानुभूतवस्तुनश्चिन्तनम् । अनुभवनम् 'अनुभवः' ॥५८॥

अथ स्मृतेः भेदाभावात् द्वितीयमनुभवं भिनत्ति—

**अनु[1]भवोऽपि प्रमा अप्रमा च ॥ ५९ ॥**

'अनुभवः' द्विधा भवतीत्यर्थाद् गम्यते । 'प्रमा' वस्तुनः सम्यक् परिच्छेदः । न प्रमा 'अप्रमा' वस्तुनोऽसम्यक्तया परिज्ञानम् ॥ ५९ ॥

प्रमाया बहुवक्तव्यत्वादादौ अप्रमां भिनत्ति—

**अप्रमापि संशयो विपर्ययश्च ॥ ६० ॥**

तत्र 'संशयः' अनिश्चितं ज्ञानं यथा स्थाणुर्वा पुरुषो वेति । 'विपर्ययः' विपरीतज्ञानं यथा शुक्तिशकले कलधौतारोप इति ॥ ६० ॥

अथ प्रमाया भेदावाह—

**प्र[2]माऽपि प्रत्यक्षमनुमितिश्च ॥ ६१ ॥**

अक्षम् इन्द्रियं प्रति गतं 'प्रत्यक्षम्', अनुमननम् 'अनुमितिः' ॥ ६१ ॥

---

१ परत्व कालकृत क नि । २ वो द्विविधः प्रमा क नि । ३ प्रमा प्रत्य क नि ।

एव इति। एतानि परार्थाङ्गानि भवन्ति, एतैः परार्थानुमानस्य सम्पूर्णत्वात् ॥ ६८ ॥

अथ स्वार्थपरार्थयोरङ्गान्याह—

**उभयाङ्गानि पक्षधर्मत्वम्, सपक्षे सत्त्वम्, विपक्षद्वयाद्वृत्तिः, अबाधितविषयत्वम्, असत्प्रतिपक्षत्वं चेति ॥ ६९ ॥**

उभयोः पूर्वोक्तयोः स्वार्थ-परार्थयोरङ्गान्यवयवाः 'उभयाङ्गानि'। एतानि पञ्च उभयत्रापि विलोक्यन्त इत्यर्थः। प्रतिज्ञादीनि पञ्च परार्थोपयोगिन्येव तेषां वचनस्वरूपत्वात्, स्वार्थलिङ्गस्य वचनानपेक्षत्वादिति।

पच्यते इति पक्षो रूढत्वात् प्रतिज्ञास्थानं शब्दादिः; तस्य धर्मः, तत्र धर्मतया आधेयरूपतया व्याप्य वर्त्तमानः तस्य भावः 'पक्षधर्मत्वम्'। कोऽर्थः? पक्षे हेतुर्व्याप्य वर्त्तमानो विलोक्यते न पुनरनित्यः शब्दः आकाशत्वादितिवदविद्यमानः। अविद्यमानत्वेऽसिद्धदोषेण दुष्टत्वापत्तेः। इत्येकमङ्गम्।

सपक्षे दृष्टान्ते सत्त्वं विद्यमानत्वं न पुनरनित्यः शब्दः शब्दत्वाद् घटवदित्यविद्यमानत्वम्। अविद्यमानत्वे विरुद्धानध्यवसितदोषाभ्यां दुष्टत्वापत्तेः।

ननु हेतुः पक्षे वर्त्तमानो विलोक्यते सपक्षेऽपि। तत्कुत एकत्र धर्मत्वमपरत्र च सत्त्वमिति भेदेनोक्तमिति चेत्? उच्यते—पक्षधर्मत्वं पक्षे व्याप्यवृत्तित्वं न पुनः पक्षैकदेशवृत्तित्वेन साध्यसिद्धिः, यथा नित्यानि वस्तूनि निष्क्रियाणि अमूर्त्तत्वादिति। अत्र सर्वेषां नित्यानां पक्षीकारादमूर्त्तान्याकाशादीनि, मूर्त्तानि परमाण्वादीनि क्रियावन्ति। तत्रामूर्त्तत्वादिति हेतुराकाशादिष्वस्ति पक्षैकदेशे परमाण्वादिषु नास्तीति। सत्त्वं पुनर्विद्यमानतामात्रम्। सपक्षे व्यापिनः सपक्षैकदेशवृत्तेश्च हेतोः सम्भवात्। तत्र शब्दाऽनित्यत्वे कृतकत्वादिः सपक्षे व्यापकः। सपक्षैकदेशवृत्तिर्यथा अमूर्त्तः शब्दो गुणत्वाद्रूपवदित्यत्र अमूर्ता रूपादयः, आकाशकर्मादयश्च सपक्षाः, तत्र 'गुणत्वात्' इति हेतुरेकदेशे रूपादिष्वस्ति आकाशादिषु च नास्तीति। एवं द्वितीयमङ्गम्।

विपक्षात्साध्यरहितात् स्थानाद्व्यावृत्तिर्नियमेन अवर्तमानत्वम्, न पुनरनित्यः शब्दः प्रमेयत्वादितिवद् विपक्षेऽपि वर्त्तमानत्वम्। वर्त्तमानत्वेऽनैकान्तिकत्वापत्तेः, केवलविपक्षवर्त्तित्वे विरुद्धत्वापत्तेश्च। इति तृतीयमङ्गम्।

अबाधितो वस्तुग्राहकप्रमाणेन प्रत्यक्षादिनाऽनिराकृतो विषयः साध्यं यस्य सोऽबाधितविषयस्तस्य भावस्तत्त्वम्, न पुनः शीतोऽग्निर्दाहकत्वाद्धिमवत् इतिवत्प्रत्यक्षबाधितः। नापि ब्राह्मणेन सुरा पेया, द्रवद्रव्यत्वात् क्षीरवद् इत्यागमबाधितः।

नापि—पृथिवीपरमाणवोऽनित्याः पाकजगुणाधिकरणत्वाद् घटवत् , अत्र प्रतिपन्थ्यनु-
मानं पृथिवीपरमाणवो नित्या निरवयवद्रव्यत्वाद् आकाशवदितिवत् सत्प्रतिपक्षो हेतुः—
वक्तव्यः । इति पञ्चममङ्गम् । 'च'कारः पुनरर्थः 'इति'शब्दः परिसमाप्त्यर्थः ॥ ६९ ॥

एतेषु अन्यतरभूषणेन रहितो हेतुरहेतुः स्यात् । भूषणानां दूषणपरिहारज्ञानपूर्वक-
त्वात् । प्रस्तावाद् दूषणानि प्रकटीकरोति—

**तदाभासाः असिद्ध-विरुद्धा-ऽनैकान्तिका-ऽनध्यवसित-कालात्यया-पदिष्टप्रकरणसमाः ॥ ७० ॥**

'असिद्धः' स्वरूपासिद्धो यथा रूपाणि सर्वाणि नित्यानि श्रावणत्वाद् इत्यादि ।
अथवा सिद्धो निश्चितः, न सिद्धोऽसिद्धः सन्दिग्धासिद्ध इत्यर्थः ।

विरुध्यते साध्येन सह विरोधमनुभवतीति 'विरुद्धः', यथानित्याः परमाणवो
मूर्त्तत्वादित्यादि ।

एकान्ते भवः ऐकान्तिकः साध्यसाधकः पक्ष-सपक्षयोरेव वर्त्तमानः । न ऐकान्ति-
कोऽनैकान्तिकः पक्ष-सपक्ष-विपक्षे वर्त्तमान इत्यर्थः । यथाऽमूर्त्तः शब्दः प्रमेयत्वादित्यादि ।

न अध्यवसितः पक्षादन्यत्र साध्यसहचरितोऽप्रतीतः पक्ष एव वर्त्तमान इत्यर्थः ।
यथा अनित्यः शब्दः शब्दत्वादित्यादिवत् ।

कालात्ययापदिष्टः प्रत्यक्षादिप्रमाणविरुद्धः यथा अग्निरनुष्णः कृतकत्वात् जलव-
दित्यादि ।

प्रकरणसमः साध्यमपि साधयति तद्विपरीतमपि साधयति। यथा—अनित्यः शब्दः
पक्ष-सपक्षयोरन्यतरत्वात् सपक्षवदिति । एवं नित्यः शब्दः पक्ष-सपक्षयोरन्यतरत्वादिति ।
अथवा सत्प्रतिपक्षोऽपि प्रकरणसम एवोच्यते, यथा शब्दो द्रव्यं भवितुमर्हति साक्षा-
दिन्द्रियसम्बन्धेन प्रतीयमानत्वाद् घटवत्; शब्दो गुणः, कर्मान्यत्वे सति जातिमात्रा-
श्रयत्वात् रूपवत् । केचिद् अस्य विरुद्धाव्यभिचारी इति सञ्ज्ञान्तरमाहुः ॥ ७० ॥

ननु तर्क इति प्रमान्तरं वर्त्तते तत्किमिति पृथङ् नोक्तम् ? स्वप्नोऽपि ज्ञानविशेषो-
ऽस्ति स किमिति पृथग् नोक्त इत्याशङ्क्याह—

**तर्क-स्वप्नौ संशय-विपर्ययावेव ॥ ७१ ॥**

तर्को विचारः वाह्यालीप्रदेशे पुरुषेणानेन भवितव्यमित्यादि संशये एवान्त-

भवति, अनवधारणात्मकत्वात्। स्वप्नश्च विपर्ययो मिथ्याज्ञानत्वाद इति तद्ग्रहणेनैव गृहीनाविति ॥ ७१ ॥

सविकल्पक-निर्विकल्पकौ ज्ञानविशेषौ वर्त्तेते। कथं पृथग् नोक्तौ इत्याशङ्क्याह—

**सविकल्पक-निर्विकल्पकयोस्तु प्रमायामप्रमायां चान्तर्भावः ॥७२॥**

विशेषेण कल्प्यते वस्तु परिच्छिद्यतेऽनेनेति विकल्पः। विकल्पेन सह वर्त्तते इति 'सविकल्पकं' सञ्ज्ञासञ्ज्ञिसम्बन्धोल्लेखेन वस्तुपरिज्ञानम्; यथा घटोऽयं शुक्ल इत्यादि। निर्गतं विकल्पं सञ्ज्ञादिपरिज्ञानं यस्मात् तत् 'निर्विकल्पकम्', यथा प्रथमाक्षसन्निपातजम्, गच्छत स्तृणस्पर्शादिज्ञानं वा। एतयोः क्वचित्प्रमायामन्तर्भावः, यथा विद्यमानं घटादिवस्तु नाम-वर्णाकारादिपरिच्छेदेन सह परिच्छिद्यते, तत् सविकल्पकं प्रमायामन्तर्भवति, विद्यमानस्य वस्तुनः सम्यक्तया ग्रहणात्। तथा नामादिपरिज्ञानरहितं विद्यमानतृणादीनां स्पर्शे जातेऽपरकार्यरुद्धमनस्कस्य गच्छतः पुरुषस्य किञ्चिन्मे[1] लगदस्तीति निर्विकल्पकं ज्ञानं सामान्याकारेण भवति। तदपि प्रमायामन्तर्भवति, विद्यमानस्य वस्तुन एव ग्राहकत्वात्। एतयोश्च क्वचिदप्रमायामप्यन्तर्भावः यथा मरुमरीचिकायां निर्मलसलिलपरिपूर्णमुपलभ्यत इदं सरोवरमिति सविकल्पकम्। तथा निःपदार्थे व्योम्नि चक्षुःसञ्चारकस्य किञ्चिद्वस्तु अत्रास्तीति उल्लेखि ज्ञानं निर्विकल्पकम् अप्रमायामन्तर्भवति निर्गोचरत्वात्तयोरिति ॥७२॥

**एवं प्रत्यभिज्ञा-हानोपादानोपेक्षाज्ञानानामपि ॥ ७३ ॥**

तत्तेदन्ताविशिष्टं पद 'प्रत्यभिज्ञा'। यथा स एवायं देवदत्त इति। 'हानं' त्याग-बुद्धिः। 'उपादानं' ग्रहणबुद्धिः। 'उपेक्षा' उदासीनबुद्धिः। एतेषामपि क्वचित्प्रमाया-मन्तर्भावः क्वचिदप्रमायां च ॥ ७३ ॥

ननु ऊहानध्यवसायौ बुद्धिविशेषौ वर्तेते तौ चाप्रमाया भेदत्वेन न्यायवादिभिरेव किमिति पृथग् नोक्ताविल्याशङ्कामधरीकरोति—

**ऊहानध्यवसाययोस्तु संशय एव ॥ ७४ ॥**

अन्तर्भाव इति पूर्वस्मादनुवर्त्तते। ऊहनम् 'ऊहः' वितर्कः सम्भावनमित्यर्थो यथा निर्मनुष्येऽरण्ये ऊर्ध्वस्थेन स्थाणुनाऽनेन भवितव्यमिति ज्ञानम्। अध्यवसीयते निश्चीयते वस्त्वनेनेत्यध्यवसायो निश्चितं ज्ञानम्। तद्विपरीतः 'अनध्यवसाय' यथा किंसञ्ज्ञकोऽयं वृक्ष इत्यादि। एतौ च संशय एवान्तर्भवत इति संशयग्रहणेनैव गृहीताविति न पृथगुपात्तौ, अनवधारणात्मकत्वाविशेषादिति ॥ ७४ ॥

---

[1] कल्पते अ. १। [2] विद्यमान अ. १। [3] जाते अ १। [4] किंचिन्मलति अ. २। [5] ज्ञानमपि अ. १, अ. २।

बुद्धेर्भेदान् प्रभेदांश्चाभिधाय सर्वेषामात्मनामतीव इष्टत्वाद् आदावुपन्यस्तं सुखं भिनत्ति—

**सुखं तु सांसारिकं स्वर्गश्च ॥ ७५ ॥**

संश्रीयते बम्भ्रम्यते मनुष्यपश्वादिषु योनिषु अस्मिन्निति संसारः। तत्र भवं 'सांसारिकम्', सुकृतोपनीतस्रक्चन्दनाङ्गनादिभोगजन्यम्। 'स्वर्गः' ऊर्ध्वलोकः तत्रेच्छामात्रेण मनोवाञ्छितार्थाः सर्वेऽपि सिद्ध्यन्ति। स्वर्गग्रहणेन स्वर्गस्थानजन्यं सुखं लभ्यते, स्थानस्थानिनोरभेदोपचारात्।

तच्च मनुष्यादिसुखादत्यन्तमतिशायित्वात् पृथगुक्तम्। न तु मोक्षे सुखमस्ति, तेन तन्नोक्तम् ॥ ७५ ॥

अथ सुखविपरीतं दुःखं भिनत्ति —

**दुःखमपि दुःखकारणमात्रप्रभवम् ॥ ७६ ॥**

'दुःखं' प्रतिकूलवेद्यमात्मनोऽरोचमानमेकप्रकारमेव भवति। दुःखकारणानि शरीरादीनि, तन्मात्रं प्रभवः उत्पत्तिस्थानं यस्य तद् 'दुःखकारणमात्रप्रभवम्'। 'मात्र'शब्दोऽपरप्रकारनिरासार्थः ॥ ७६ ॥

अथ सर्वेषामात्मनां सुखविषया इच्छा भवति, दुःखविषयश्च द्वेषो भवति। एतयोः सुखदुःखानन्तरमुपन्यस्तयोर्यथाक्रमं भेदानाविष्करोति—

**इच्छाऽपि साध्यविषया साधनविषया च, द्वेषोऽपि साध्यविषयः साधनविषयश्च ॥ ७७ ॥**

'इच्छा' अभिलाषः, 'द्वेषः' च ज्वलनात्मक आत्मगुणो द्विविधो भवति। साध्यं प्रयोजनं विषयो यस्याः सा 'साध्यविषया' यथा भोजनार्थिनो भोजनविषया। यथा (तथा) 'साधनविषया'। साध्यं भोजनं तत्साधकमन्नादिकं तत्साधनं द्रव्यादिकं तद्विषया इच्छा 'साधनविषया'। तथा दुःखद्वेषिणो दुःखविषयप्रद्वेषः साध्यविषयः। दुःखकारणेषु वैरिवर्गेषु यः प्रद्वेषः स साधनविषय इति ॥ ७७ ॥

अथात्मनिष्ठप्रयत्नमात्मगुणभेदकथनावसरप्राप्तत्वाद्भिनत्ति—

**प्रयत्नोऽपि विहितप्रतिषिद्धोदासीनविषयः ॥ ७८ ॥**

प्रयतते उत्सहते येन गुणेन स 'प्रयत्नः' उत्साह इत्यर्थः। स त्रिविधो भवतीति गम्यते। विहितः शास्त्रे करणीयत्वेन प्रतिपादितो धर्महेतुर्विषयो यस्य स 'विहितविषयः'।

---

१ 'तु' क, नि पुस्तकयोर्नास्ति। २ निषिद्धो क, नि।

'विषय'शब्दस्य प्रत्येकमभिसम्बन्धात्; यथा देवयात्रादिनिमित्तमुद्यमः। प्रतिषिद्धः शास्त्रेऽकरणीयत्वेन प्रतिपादितः पापहेतुर्विषयो यस्य स 'प्रतिषिद्धविषयः' यथा परदारादिगमनचौर्यादिकरणमुद्यमः। उदासीनो न विहितो नापि निषिद्धो विषयो यस्य स उदासीनविषयो यथा शरीरकण्डूयनाद्यर्थं हस्तचालनादिप्रयत्नः तस्य शास्त्रेषु करणीयाकरणीयत्वाभ्यामप्रतिपादनात् पुण्य-पापयोरहेतुत्वाच्च ॥ ७८ ॥

सूत्रकारकण्ठोक्तान् सप्तदशगुणानभिधाय 'च'शब्दसूचितान् सप्त वक्ति। यथा प्रयत्नः कर्मणो हेतुस्तथा गुरुत्वमपि कर्मणो हेतुरिति ज्ञापनार्थं प्रयत्नानन्तरमुपन्यस्तं गुरुत्वं भिनत्ति—

### गुरुत्वं समाहाररूपमेकावयविनिष्ठं च ॥ ७९ ॥

'गुरुत्वं' भारापरपर्यायं द्विधा भवतीति गम्यते। सम्—सामस्त्येन आहरणमेकत्र[1] मेलनं बहूनां वस्तूनामस्मिन्निति समाहारस्तद्रूपं तत्स्वभावम्, यथा लघूनामप्यर्कतूलादीनां वस्तूनां सम्मेलनाद् भारो भवति तत् 'समाहाररूपं गुरुत्वम्'। एकस्मिन्नवयविनि[2] लोह-लोष्टादौ निष्ठा यस्य तद् एकावयविनिष्ठं, तस्यैकस्यापि बहुभारत्वात् ॥ ७९ ॥

अथ कर्म्मणः कारणत्वेन गुरुत्वेन सह समानताख्यापनार्थं तदनन्तरमुपन्यस्तं द्रवत्वं विभजते—

### द्रवत्वं सांसिद्धिकं नैमित्तिकं च ॥ ८० ॥

संसिद्धेः स्वभावाद्द्रवं 'सांसिद्धिकं' जलपरमाणुषु समवेतं नित्यम्। अनित्यं अनित्यजलेषु। अप्सु द्रव्योत्पत्तेरनन्तरं द्वितीयक्षणे एवोत्पद्यते; द्रव्यविनाशानन्तरं च विनश्यति नार्वाग्; तस्मादप्सु सांसिद्धिकं द्रवत्वमिति। निमित्तादग्निसंयोगादेर्जातं नैमित्तिकं, यथा पार्थिवं घृतादि, तैजसं सुवर्णादि स्वभावादद्रवमपि वह्निसंयोगादिनिमित्ताद् द्रवीभवति द्रव्यनाशादर्वागपि पुनः पिण्डीभूतमद्रवस्वभावं स्यादिति नैमित्तिकं द्रवत्वं पृथिव्यां तेजसि च स्थितमिति ॥८०॥

अथ स्वाभाविकद्रवत्ववतीष्वेवाप्सु स्वाभाविकः स्नेहः स्यादिति द्रवत्वानन्तरमुपन्यस्तस्य स्नेहस्य भेदावाह—

### स्नेहः स्वाभाविक औपाधिकश्च ॥ ८१ ॥

स्निह्यते सङ्गृह्यते[3] रेण्वादिकमनेनेति 'स्नेहः'। स्वभावाद्भवः 'स्वाभाविकः' यावद्द्रव्यभावीऽयर्थः, यथा जले। उपाधेर्जलपरमाणुसंयोगाद् भवः 'औपाधिकः' यथा सलिल-

---

१ आहारण अ. १। २ अवयवित्वं नाम किम्? स्वस्वरूपाऽतिरिक्ताऽवयवाऽनपेक्षत्वम् अवयवित्वं, तस्मिन्; अ. १. पा. टि। ३ र्यते क।

परमाणुनिष्ठोऽपि स्नेहः संयोगेन मिश्रीभूतत्वात् पार्थिवघृतादिनिष्ठः प्रतीयते।

ननु घृतादिषु स्वाभाविक एव स्नेहः किं नोच्यते इति चेत्? न, घृतादि स्नेह-विकलम्, पार्थिवत्वात्, लोष्ठवत्। अथवा भौमाग्नीन्धनत्वात् तृणादिवदिति, प्रमाण-बाधितत्वात्। प्रतीयते च स्नेहस्तस्मादौपाधिकः कथ्यते "मुख्यार्थबाधे उपाधिः" इतिवचनादिति॥ ८१॥

अथात्मनिष्ठं संस्कारं भिनत्ति—

## संस्कारो वेगो भावना स्थितिस्थापकश्च ॥८२॥

संस्क्रियते पूर्वावस्थातः विशेषं आपद्यतेऽनेनेति 'संस्कारः'। स त्रिविधो भवतीति गम्यते। तत्र धावतः पुरुषस्य शीघ्रगमनोत्पाद्यो यो जवो भवति, धावन् पुमान् स्थातुमना अपि येन गुणेन स्थातुं न शक्नोति स 'वेगः'। भावनं 'भावना' चिन्तनं स्मरणमित्यर्थः। तस्योत्पादकः संस्कारोऽपि 'भावना', कारणे कार्योपचारात्। स्थितौ स्वाभाविक्यामवस्थाया स्थापयतीति 'स्थितिस्थापकः' यथा श्वपुच्छिका स्वभाववक्रा नलिकान्तः प्रक्षिप्य षण्मासानन्तरं निष्कासिता येन गुणेन वक्रैव भवति स स्थितिस्थापक इति। वेगस्थितिस्थापकौ आद्यचतुष्टयद्रव्यनिष्ठौ, भावना चात्मनिष्ठा॥८२॥

अथावशिष्टात्मगुणौ भेत्तव्याविति धर्माधर्मयोर्मध्ये पूर्वं सुखसाधकत्वादिष्टं धर्मं भिनत्ति—

## धर्मः प्रवर्त्तको निवर्त्तकश्च ॥८३॥

धरति दुःखेभ्यस्त्रायत इति 'धर्मः'। प्रवर्त्तयति संसारे तीव्रं भ्रमयति इति 'प्रवर्त्तकः' यथा पापानुबन्धिना धर्मेण लक्ष्म्यो भवन्ति। तासां मदेन च पापकर्माणि करोति। ततः सुचिरं संसारे बम्भ्रमीति। संसारान्निवर्त्तयतीति 'निवर्त्तकः' यथा तत्त्वज्ञानोत्पाद्येन धर्मेण पापक्षयो भवति, धर्मस्य च भोगेन क्षयः, ततो मुक्तिः। "पापपुण्यक्षये मोक्षः" इति वचनादिति निर्वृतेर्धर्ममूलत्वान्निवर्त्तक इति ॥८३॥

अथ तद्विपरीताधर्मभेदौ स्फुटीकरोति—

## अधर्मः फलावसानो नमस्कारादिनाश्यश्च ॥८४॥

न धर्मः 'अधर्मः' पापम्, फलेन दुःखभोगेनाऽवसानं पर्यन्तो विनाशो यस्य स 'फलावसानः' यथा—अधर्मं हिंसादिकं विधाय मृत्वा नानादुर्योनिषु च्छेदनभेदनादीनि फलानि भुक्त्वा तेन पापेन जीवो मुच्यते, न पुनः दुःखभोगं विना। तथा नाश्यते इति

नाश्य । योऽधर्म तपश्चरणादिना क्षीयते, न पुनरात्मफलेन दु खभोगेन, यतोऽतिविहिता-नेकपातकोऽपि तपोभि सशोधितात्मा नोऽधर्मफलानि भुङ्क्ते इत्यर्थ ॥८४॥

अथावशिष्टस्य गुणस्य भेदौ स्पष्टयति—

**शब्दो वर्णात्मकोऽवर्णात्मकश्च ॥८५॥**

वर्णा अकारादयस्तदात्मको यथा विदग्धवचनम् । 'अवर्णात्मक' भेर्यादिशब्द ॥८५॥

एव गुणभेदानभिधाय नित्यानित्यविभागमाह—

**अत्र गन्ध-संयोग-विभाग-परत्वाऽपरत्व-सुख-दुःख-द्वेष-संस्कार-धर्माऽधर्म-शब्दा अनित्यैकरूपाः ॥८६॥**

अत्र एतेषु गन्धादयो गुणा नित्येषु परमाण्वाकाशादिषु स्थिता , अनित्येषु द्व्यणुक-घटादिषु स्थिता सर्वत्राऽनित्यमेव एक—रूप स्वरूप येषा त अनित्यैकरूपा [1]। यावद्द्रव्य-भाविवात् न च नित्या इत्यर्थ । पार्थिव परमाणुषु गन्धस्य पाकजत्वात्र नित्यत्वम् अपरपर-माणुषु तस्यैवाभावादिति ॥८६॥

**अन्ये नित्यानित्यरूपाः ॥८७॥**

'अन्ये' पूर्वोक्तेभ्योऽवशिष्टा रूप स्पर्श रस-सङ्ख्या परिमाण पृथक्त्व-बुद्धीच्छा-प्रयत्न गुरुत्व-द्रवत्व स्नेहाख्या । बुद्धीच्छाप्रयत्नवर्जा नित्येषु नित्यरूपा, अनित्येषु द्व्यणुकादिषु अनित्यरूपा । बुद्धीच्छा प्रयत्ना अस्मदादिनिष्ठा अनित्या मुक्ततायामेतेषा-मुच्छेदात् । ईश्वरनिष्ठा पुनर्नित्या एव तेषा सार्वदिकत्वात् ॥८७॥

अथ व्यापकाव्यापकभेदावाह—

**संयोग-विभाग-सुख-दुःख द्वेष-संस्कार-धर्मा-ऽधर्म-शब्दा अव्यापकाः ॥८८॥**

एत सयोगादय , अव्यापका स्वाश्रयैकदेशवृत्तय ॥८८॥

**बुद्धीच्छा प्रयत्ना उभयरूपाः ॥८९॥**

स्वाश्रयैकदेशवृत्तयोऽस्मदादिषु, स्वाश्रयव्यापका ईश्वरे ॥८९॥

**अन्ये स्वाश्रयव्यापकाः ॥९०॥**

'अन्ये' एतेभ्योऽवशिष्टा रूपादयो द्वादशगुणा 'स्वाश्रयव्यापका' एव ॥९०॥

---

१ अन्ये तु क । २ सयोगादिशब्दान्तास्तु अव्यापका एव-क । ३ सङ्कुचित वस्तु-अ ।

अथ कर्म्मणां विभागमाचष्टे—

**उत्क्षेपणादयो विहितनिषिद्धोदासीनरूपाः ॥९१॥**

'उत्क्षेपणादयः' विहितरूपाः पञ्च, निषिद्धरूपाः पञ्च, उदासीनरूपाः पञ्च, इति पञ्चदश भवन्ति इति । तद्यथा—उत्क्षिप्यते वस्तूर्ध्वदेशे क्षिप्यतेऽनेनेत्युत्क्षेपणम् । तत् क्वचिद्विहितं पुण्योपचयहेतुर्विधितः प्राप्तम्; यथा वेदोच्चारार्थं हस्तोत्क्षेपणम् । क्वचित्प्रतिषिद्धं पापहेतुर्भवति यथा जीवाभिघातार्थं लकुटोत्क्षेपणम् । क्वचिदुदासीनं पुण्यपापयोरहेतुः, यथा शिरःकण्डूयनार्थं लकुटोत्क्षेपणम् । 'आदि'शब्दाद् अपक्षेपणाकुञ्चनप्रसारणगमनादीनि गृह्यन्ते । तत्रापक्षिप्यते वस्तु अधोऽनेनेत्यपक्षेपणम् । क्वचिद्विहितं यथा देवादिनमस्यार्थं शिरोऽवनामः । क्वचित्प्रतिषिद्धं यथा जीवघाताय मुद्गलाद्यपक्षेपणम् । क्वचिदुदासीनं यथा गच्छतः पुरुषस्योपरि पादापक्षेपणम् । आकुञ्च्यते सङ्कोचं वस्तु नीयतेऽनेनेति आकुञ्चनम् । तत् क्वचिद्विहितं यथा जीवाकुलायामिलायां जीवरक्षणार्थं शरीरसङ्कोचनम् । प्रतिषिद्धं यथा चौर्याय प्रविशतो विवरादौ स्वावयवसङ्कोचनम् । उदासीनं यथा स्ववस्त्रादिसङ्कोचनम् । प्रसार्यते सङ्कुचितं[1] वस्तु विस्तारं नीयतेऽनेनेति प्रसारणम्; तत् क्वचिद्विहितं यथा देवपूजार्थं हस्तप्रसारणम् । प्रतिषिद्धं च प्रतिग्रहार्थं हस्तप्रसारणम् । उदासीनं स्ववस्त्रादिप्रसारणम् । गम्यते स्थानान्तरमनेनेति गमनम् । तत् क्वचिद्विहितं यथा देवयात्रार्थम् । प्रतिषिद्धं यथा परदारगमनार्थम् । उदासीनं यथा भोजनार्थं गमनमिति । एवं पञ्चसु कर्मसु प्रत्येकं भेदत्रयसम्भवात् पञ्चदश भेदा भवन्ति ॥९१॥

अथ सामान्यभेदावाविर्भावयति—

**सामान्यं जातिरूपमुपाधिरूपं च ॥९२॥**

जातिरेव रूपं स्वरूपं यस्य तत् 'जातिरूपम्' । तथा 'उपाधिरूपम्' अपि ॥९२॥

जातिः किमुच्यते इत्याशङ्क्याह—

**जातिः सत्ताद्रव्यत्वगुणत्वकर्मत्वादि ॥९३॥**

जातिः सार्वदिकं सामान्यं गमनादिक्रियानिरपेक्षं वस्तु स्वाभाविकम् । तत्र सत्ता—यस्याः सकाशात् 'सत्' 'सत्' इति प्रत्ययो भवति । पृथिव्यादिषु 'द्रव्यं' 'द्रव्यम्', गुणेषु 'गुणः' 'गुणः', उत्क्षेपणादिषु 'कर्म' 'कर्म' इति प्रत्यया भवन्ति, तद् द्रव्यत्वं गुणत्वं कर्मत्वम् आदिशब्दात् पृथिवीत्वं घटत्वं गोत्वमित्यादि ॥ ९२ ॥

उपाधिरूप किमुच्यते इत्याशङ्क्याह—

**उपाधिरूपं पाचकत्वादि ॥ ९४ ॥**

[1] सङ्कुचितं च वस्तु अ १ । २ त्वम् ॥ अ १ अ २ ।

नाश्यः। योऽधर्मः तपश्चरणादिना क्षीयते, न पुनरात्मफलेन दुःखभोगेन, यतोऽतिविहिता-नेकपातकोऽपि तपोभिः संशोधितात्मा नोऽधर्मफलानि भुङ्क्ते इत्यर्थः ॥८४॥

अथावशिष्टस्य शब्दस्य भेदौ स्पष्टयति—

**शब्दो वर्णात्मकोऽवर्णात्मकश्च ॥८५॥**

वर्णा अकारादयस्तदात्मको यथा त्रिदशवचनम्। 'अवर्णात्मक.' भेर्यादिशब्दः॥ ८५॥

एवं गुणभेदानभिधाय नित्यानित्यविभागमाह—

**अत्र गन्ध-संयोग-विभाग-परत्वाऽपरत्व-सुख-दुःख-द्वेष-संस्कार-धर्माऽधर्म-शब्दा अनित्यैकरूपाः ॥८६॥**

अत्र एतेषु गन्धादयो गुणा नित्येषु परमाण्वाकाशादिषु स्थिताः, अनित्येषु द्व्यणुक-घटादिषु स्थिता. सर्वत्राऽनित्यमेव एकं—रूपं स्वरूपं येषां ते अनित्यैकरूपाः'। यावद्द्रव्य-भावित्वात् न च नित्या इत्यर्थः। पार्थिव-परमाणुषु गन्धस्य पाकजत्वान्न नित्यत्वम् अपरपर-माणुषु तस्यैवाभावादिति ॥८६॥

**अन्ये नित्यानित्यरूपाः ॥८७॥**

'अन्ये' पूर्वोक्तेभ्योऽवशिष्टाः रूप-स्पर्श-रस-सङ्ख्या-परिमाण-पृथक्त्व-बुद्धीच्छा-प्रयत्न-गुरुत्व-द्रवत्व-स्नेहाख्याः। बुद्धीच्छाप्रयत्नवर्जा नित्येषु नित्यरूपाः, अनित्येषु द्व्यणुकादिषु अनित्यरूपाः। बुद्धीच्छा-प्रयत्ना अस्मदादिनिष्ठा अनित्या मुक्ततायामेतेषा-मुच्छेदात्। ईश्वरनिष्ठाः पुनर्नित्या एव तेषां सार्वदिकत्वात् ॥८७॥

अथ व्यापकाव्यापकभेदावाह —

**संयोग-विभाग-सुख-दुःख-द्वेष-संस्कार-धर्मा-ऽधर्म-शब्दा अव्यापकाः ॥८८॥**

एते संयोगादयः अव्यापकाः स्वाश्रयैकदेशवृत्तयः ॥८८॥

**बुद्धीच्छा प्रयत्ना उभयरूपाः ॥८९॥**

स्वाश्रयैकदेशवृत्तयोऽस्मदादिषु, स्वाश्रयव्यापका ईश्वरे ॥८९॥

**अन्ये स्वाश्रयव्यापकाः ॥९०॥**

'अन्ये' एतेभ्योऽवशिष्टा रूपादयो द्वादशगुणा 'स्वाश्रयव्यापकाः' एव ॥९०॥

१ अन्ये तु क। २ संयोगादिशब्दान्तास्तु अव्यापका एव–क। ३ सङ्कुचित वस्तु–म।

ननु प्रतीयते एव शीतस्पर्शः तमसि, पित्ताकुलस्य मान्द्याधिष्ठितस्य तापशान्त्यर्थं वैद्यैस्तमसि स्थापनोपदेशादिति चेत्, तदसारम्, कारागृहादौ प्रभूतनिरन्तरध्वान्तसद्भावेऽपि महदूष्मानुभावात्। यो मन्दस्य तमसि स्थापनोपदेशः स तैजसोष्णस्पर्शनिवृत्त्यर्थं, तमसश्च तेजोऽभावरूपत्वात्। कारागृहादौ तमोभावे ऊष्मानुभावादुष्णस्पर्शं तदिति चेत्, न, औदर्यतेजसः प्राणवायुना दीप्यमानस्यैव तदौष्ण्यात्। तस्मादस्पर्शवदेव तमः। तत्र प्रमाणम्—तमो न स्पर्शवत् स्पर्शनाग्राह्यत्वाद्गगनवत्। नाऽयं हेतुरसिद्धः, निर्मीलितनयनस्य स्पर्शनेनाऽन्धकारमस्ति नास्ति वेति प्रत्ययाभावात्। ततश्चाऽस्पर्शवत्त्वान्न रूपवत्त्वम्। ननु कृष्णाकारेण कुतस्तत्प्रतीतिरिति चेत्? उच्यते, सर्वे चाक्षुषाः पदार्था आलोकसहकृता चक्षुषा विलोक्यन्ते, यत्र चालोको न भवति तत्र पदार्थावलोकाभावे भ्रान्त्या कृष्णाकारा प्रतीतिर्भवति। यथा प्रकाशेऽपि वर्तमानस्य पुंसो निमीलितनयनयमलस्य प्रलीननयनस्य वा चक्षुषा पदार्थाऽवभासाभावे सर्वं जगद् अञ्जनावलिप्तमिवावभासते। तस्मान्न तत्र रूपमस्ति। तस्मान्न द्रव्यं किन्तु स भासामभाव एवेति स्थितम् ॥ ९७ ॥

ननु एते सप्ताऽपि पदार्थाः शक्तिमन्तः कार्याणि कुर्युस्तद्रहिता वा? द्वितीयपक्षे पृथिवीवद्दहनोऽपि दहनक्रियां न कुर्यात्, दाहकत्वरहितत्वाऽविशेषात्। शक्तिमन्तश्चेत्, तर्हि सा शक्तिरष्टमः पदार्थः किं नावादीत्याशङ्क्याह—

## शक्तिः स्वरूपमेव ॥ ९८ ॥

'शक्तिः' दहनादीनां 'स्वरूपमेव' न पुनः पृथक् पदार्थ इत्यर्थः।

ननु दाहकत्वस्य स्वाभाविकत्वाङ्गीकारे मणिमन्त्रौषधीनां सान्निध्येऽपि ज्वलनोऽङ्गुल्यादि प्रज्वालयेत्, स्वभावस्यान्यथा कर्तुमशक्यत्वात्। न चैवं दृश्यते। तस्माद्दाहकत्वं नाम शक्तिर्वस्तुतः पृथग्भूताऽस्ति। सा च मणिमन्त्रादिसान्निध्येन प्रतिबध्यते। ततश्च दाहकत्वं पावके इति चेत्।

तदपि फल्गु, यतो दहनस्येदृश एव स्वभावो यत्तादृशमणिमन्त्रादीनामसान्निध्ये एव दाहकत्वं, न तत्सान्निध्ये। यथा लोहस्य अयस्कान्तपाषाणसान्निध्ये एव स्वतन्त्रा क्रिया, न पुनरसान्निध्ये, तस्य तथाविधस्वभावत्वात्। ननु शक्त्यनङ्गीकारे गगनेन्दीवरवत् न किञ्चिद्वस्तु कार्यं कुर्यात्, निःशक्तिकत्वाऽविशेषात् इति चेत्। उच्यते, शक्तिः शक्तिमती तद्रहिता वा? आद्ये सैव शक्त्यन्तरं वा? सा चेत्, आत्माश्रयः, शक्त्य-

---

१ इति आक्षेपे अ. १ पा टि। २ नयनस्पर्शनेऽन्धकार॰ अ २। ३ °मस्ति नेति अ १। ४ भावश्च॰ अ. २। ५ प्रकाशेऽपि अ १। ६ शक्तिद्रव्यादिकरच॰ क। शक्तिद्रव्यादिस्व॰—नि।

पचतीति पाचकस्तस्य भावस्तत्वम्। यतो हि पाचकेषु सर्वेषु पाचकोऽयं पाचकोऽयमिति अनुवृत्तिप्रत्ययो भवतीति पाचकत्वं सामान्यं भवति, पाचकोऽपि पचनक्रियापरित्यागादपाचक इति प्रतीयते, यतः स पाचकः पठनक्रियाकरणात्पाठकोऽपि, लेखनक्रियाकरणात् लेखक इति। तस्मात् पाचकत्वं सामान्यम्, अनुवृत्तिप्रत्ययहेतुत्वात्, सबाधकत्वाच्चोपाधिरूपं कथ्यते "मुख्यार्थबाधे उपाधिः" इति वचनात् ॥ ९४ ॥

विशेषाणां त्वनन्ता भेदाः प्रागुक्ता एव। समवायस्य भेदो नास्ति तस्यैक्यात्। अथ चतुर्णामप्यभावानां प्रभेदान् वक्ति—

**प्रागभावादयः प्रतियोगिभेदादनन्ता एव ॥ ९५ ॥**

प्राक् पूर्वमभावो यथा चक्रचा(च)टितायां मृदि घटप्रागभावः। आदिशब्दात् प्रध्वंसाभावादयस्तेषां प्रतियोगी विरोधी, यथा घटाभावादेर्घटादिः। तस्य भेदादानन्त्यात् प्रत्येकं चत्वारोऽप्यभावा अनन्ता एव। यस्याऽभावः कथ्यते तस्य यः सम्बन्धी प्रतियोगी यथा घटाभावस्य घट इति ॥ ९५ ॥

ननु परत्वेन विप्रकृष्टत्वप्रत्ययो भवति, अपरत्वेन अदूरत्वप्रत्ययो भवति। ते परत्वापरत्वे उक्ते परं 'मध्यमोऽयं' इति प्रतीतिहेतुर्मध्यमत्वं गुणो नोक्तः किमर्थमित्याशङ्कामपाकरोति—

**मध्यमत्वं परत्वापरत्वाभावः ॥ ९६ ॥**

यत्र परत्वापरत्वयोरभावो भवति तत्र मध्यमत्वं प्रतीयते परं स तयोरभावः, न गुणान्तरमिति ॥ ९६ ॥

ननु नवैव द्रव्याणीति न सङ्गतम्, दशमद्रव्यस्यान्धकारस्य भावात्। तथाहि तमो द्रव्यम्, रूपाधिकरणत्वादञ्जनवदिति प्रमाणसिद्धे—इत्याशङ्क्याह—

**अन्धकारोऽपि भासामभाव एव ॥ ९७ ॥**

न पुनर्द्रव्यान्तरम्। यत्पुनः प्रमाणमभाणि तदसिद्धदोषदुष्टमिति न साध्यसाधकम्। तमश्चेद् द्रव्यं तदा नित्यमनित्यं वा? न तावन्नित्यम्, भास्करकरप्रसरावसरे विनाशदर्शनात्। अनित्यं चेत्, आकस्मिकं परमाणुप्रक्रमेणोत्पन्नं वा? न तावदाद्यम्, आकस्मिकस्य वस्तुनोऽसम्भवात्। द्वितीयपक्षे ते परमाणवः स्पर्शवन्तः स्पर्शशून्या वा? न तावत्स्पर्शशून्याः, तेषां मनोवत् कार्यद्रव्यानारम्भकत्वापत्तेः। नापि स्पर्शवन्तः, तत्कार्ये स्पर्शाऽनवलोकात्।

---

१ भवति। पाचकता अ. १। २ मध्यतरम् क, नि। ३ मध्यमगुण अ १ पा टि। ४ अन्धकारोप्यभाव क, नि। ५ अस्पर्शवत्त्वान्मनसो द्रव्याऽनारम्भकत्वं इति प्रशस्तकरभाष्ये अ १ पा टि ॥

नेनु प्रतीयते एव शीतस्पर्शः तमसि, पित्ताकुलस्य मान्याधिष्ठितस्य तापशान्त्यर्थं वैद्यैस्तमसि
संस्थापनोपदेशादिति चेत्, तदसारम्, कारागृहादौ प्रभूतनिरन्तरध्वान्तसद्भावेऽपि महदू-
ष्मानुभावात्। यो मन्दस्य तमसि स्थापनोपदेशः स तैजसोष्णस्पर्शनिवृत्त्यर्थं, तमसश्च
तेजोऽभावरूपत्वात्। कारागृहादौ तमोभावे ऊष्मानुभावादुष्णस्पर्शं तदिति चेत्, न, औदर्य-
तेजसः प्राणवायुना दीप्यमानस्यैव तत्रौष्ण्यात्। तस्मादस्पर्शवदेव तमः। तत्र प्रमाणं—तमो
न स्पर्शवत् स्पर्शनाग्राह्यत्वाद्गगनवत्। नाऽयं हेतुरसिद्धः, निर्मीलितनयनस्य स्पर्शनेनाऽत्रा-
न्धकारमस्ति नास्ति वेति प्रत्ययाभावात्। ततश्चाऽस्पर्शवत्वान्न रूपवत्त्वम्। ननु कृष्णाकारेण
कुतस्तत्प्रतीतिरिति चेत्? उच्यते, सर्वे चाक्षुषाः पदार्था आलोकसहकृताः चक्षुषा विलोक्यन्ते;
यत्र चालोको न भवति तत्र पदार्थावलोकाभावे भ्रान्त्या कृष्णाकारा प्रतीतिर्भवति। यथा
प्रकाशेपि वर्त्तमानस्य पुंसो निमीलितनयनयमलस्य प्रलीननयनस्य वा चक्षुषा पदार्थाऽ-
वभासाभावे सर्वं जगद् अञ्जनावलिप्तमिवावभासते। तस्मान्न तत्र रूपमस्ति। तस्मान्न
द्रव्यं किन्तु स भासामभाव एवेति स्थितम् ॥ ९७ ॥

ननु एते सप्ताऽपि पदार्थाः शक्तिमन्तः कार्याणि कुर्युस्तद्रहिता वा? द्वितीयपक्षे
पृथिवीवद्दहनोऽपि दहनक्रियां न कुर्यात्, दाहकत्वरहितत्वाऽविशेषात्। शक्तिमन्तश्चेत्;
तर्हि सा शक्तिरष्टमः पदार्थः किं नावादीत्याशङ्क्याह—

**शक्तिः स्वरूपमेव ॥ ९८ ॥**

'शक्तिः' दहनादीनां 'स्वरूपमेव' न पुनः पृथक् पदार्थ इत्यर्थः।

ननु दाहकत्वस्य स्वाभाविकत्वाङ्गीकारे मणि-मन्त्रौषधीनां सान्निध्येऽपि ज्वलनोऽ-
ङ्गुल्यादि प्रज्वालयेत्, स्वभावस्यान्यथा कर्तुमशक्यत्वात्। न चैवं दृश्यते। तस्माद्दाहकत्वं
नाम शक्तिर्वस्तुतः पृथग्भूताऽस्ति। सा च मणिमन्त्रादिसान्निध्येन प्रतिबध्यते। ततश्च
दाहकत्वं पावके इति चेत्।

तदपि फल्गु, यतो दहनस्येदृश एव स्वभावो यत्तादृशमणिमन्त्रादीनाम-
सान्निध्ये एव दाहकत्वं, न तत्सान्निध्ये। यथा लोहस्य अयस्कान्तपाषाणसान्निध्ये एव
स्वतन्त्रा क्रिया, न पुनरसान्निध्ये, तस्य तथाविधस्वभावत्वात्। ननु शक्त्यनङ्गीकारे गगने-
न्दीवरवत् न किञ्चिद्वस्तु कार्यं कुर्यात्, निःशक्तिकत्वाऽविशेषात् इति चेत्। उच्यते,
शक्तिः शक्तिमती तद्रहिता वा? आद्ये सैव शक्त्यन्तरं वा? सा चेत्, आत्माश्रयः; शक्त्य-

१ इति आक्षेपे अ. १. पा. टि। २ नयनस्पर्शनेऽत्रान्धकार° अ २। ३ °मस्ति वेति अ. १। ४ भावश्चा° अ. २। ५ प्रकाशेऽपि अ. १। ६ शक्तिर्द्रव्यादिकस्य॰ क। शक्ति-द्रव्यादिस्व°—नि।

न्तरं चेत्, स्पष्टैवानऽवस्था। द्वितीयपक्षे सा शक्तिः स्वाश्रये [1]किञ्चिद्विशेषं करोति वा न [करोति?।] करोतीति चेद्, [2]व्याहतोऽसि, भवन्मते निःशक्तिकस्य गगनेन्दीवरायमानत्वात्। नेति चेत्; पूर्ववत् [3]शक्त्युत्पत्तावपि अदाहकत्वमेव, पावके विशेषानाधानात्। अथ पूर्वमपि दाहकत्वमस्तीति चेत्; तर्हि शक्त्याः किं फलम्? तस्मान्न शक्तिः स्वरूपात् पृथगिति ॥ ९८ ॥

ननु 'दण्डी' इत्यत्र प्रतीतेर्दण्डपुरुषयोरन्यतरो विषयः उभयं वा? न तावदुभयम्, ज्ञानस्य युगपत्पदार्थद्वयाग्राहकस्वभावत्वात्। नाऽप्यन्यतरो दण्डविशिष्टस्यैव पुरुषस्य ग्रहणोपलम्भात्। तस्माद्दण्डपुरुषव्यतिरेकिणी 'दण्डी' इति मिलितप्रतीतिवेद्या तदुभयनिष्ठा एकरूपा विशिष्टिर्नाम पदार्थान्तरमस्तीत्याशङ्क्याह—

**[4]विशिष्टिस्तु विशेषणविशेष्यसम्बन्ध एव ॥९९॥**

विशेषणं 'विशिष्टिः' सा न पदार्थान्तरं किन्तु 'विशेषणविशेष्यसम्बन्धः'। विशेष्यते विजातीयेभ्यो भेदेनाभिधीयतेऽनेनेति विशेषणं दण्डः, विशेष्यते यत्तद्विशेष्यं पुरुषः; तयोर्यः परस्परं सम्बन्धः संयोगः स एव विशिष्टप्रत्ययस्य विषयः। क्वचित्समवायोऽपि यथा 'शुक्लोऽयं पटः' इति ॥९९॥

ननु सादृश्यं भिन्नपदार्थो वक्तव्यः सदृशेष्वपि वैसदृश्यदर्शनाद् इत्याशङ्क्याह—

**सादृश्यम् उपाधिरूपं सामान्यम् ॥१००॥**

न जातिरूपं, जातिरूपत्वे सार्वदिकत्वप्रसङ्गात् ॥१००॥

ननु लघुत्वं गुणान्तरमस्ति। तथा च सति पञ्चविंशतिर्गुणा इत्याशङ्क्याह—

**लघुत्वं गुरुत्वाभाव एव ॥१०१॥**

यत्र गुरुत्वं वह्निपवनादिषु न, तत्र लघुत्वम्। तच्च गुरुत्वाभावरूपमेव न गुणान्तरम् ॥१०१॥

ज्ञाते वस्तुनि ज्ञातता पदार्थान्तरमुत्पद्यते इत्याशङ्क्याह—

**ज्ञातता ज्ञानसम्बन्ध एव ॥१०२॥**

ज्ञाते वस्तुनि 'ज्ञातता'लक्षणो यो धर्म्मः प्रतीयते स, ज्ञानेन सह यः सम्बन्धो विषयविषयिभावलक्षणः स एव, न वस्तुविषयो धर्म्म इति ॥१०२॥

**[7]एवमन्यस्यापि पदार्थस्य सतोऽत्रैवान्तर्भावः ॥१०३॥**

---

१ किञ्चिद् अ. १। २ व्याहितोऽसि अ. १। ३ शक्त्युत्पत्तावदाह° अ. १। ४ वैशिष्ट्यं तु विशे° क, नि। ५ ष्यभावः सम्बन्धः॥ क। ६ 'एव' नास्ति क, नि। ७ नास्त्येतत् सूत्रम्–क. नि।

'एवं' यत्किञ्चिद्वस्तु पदार्थरूपं तावत्प्रतीतिगोचरं तत्सर्वमत्रैवान्तर्भूतम्। एष्वेव सप्तसु पदार्थेष्वन्तर्भूतमित्यर्थः ॥१०३॥

**यथा सङ्ख्याया एव गुणे ( [1]या गुणे एव ) ॥१०४॥**

'सङ्ख्यायाः' 'गुणे एव' अन्तर्भावो न पृथक् पदार्थान्तरमित्यर्थः। ननु सङ्ख्या गुणश्चेत् कथं गुणादिषु वर्त्तते? "गुणवद् द्रव्यम्" इति वचनात् सङ्ख्या गुणश्चेद् द्रव्येष्वेव भवेत्। सत्यम्, गुणादिषु सङ्ख्या नास्त्येव, तथापि गुणादिषु सङ्ख्याव्यवहारः सङ्ख्याप्रत्यासत्तिनिबन्धनः। द्रव्येष्वेव गुणादयोऽपि सन्ति सङ्ख्याप्यस्ति। अतः प्रत्यासत्तेः सङ्ख्या गुणादिषु उपचर्यते ॥१०४॥

**एतेषु च मध्ये नित्यानां कारणत्वमेव ॥१०५॥**

एतेषां सप्तानामपि पदार्थानां 'मध्ये नित्यानां कारणत्वमेव'। नित्यानि वस्तूनि कारणरूपाण्येव भवन्ति, न तु स्वयमुत्पद्यन्ते, नित्यानामुत्पत्तिरहितत्वात् ॥१०५॥

**अनित्यानां कारणत्वं कार्यत्वं च ॥१०६॥**

अनित्यानां तन्त्वादीनां कारणत्वं पटाद्युत्पत्तौ [2]निमित्तत्वं; कार्यत्वं च स्वावयवानाम् ॥१०६॥

तत्र कारणं कतिविधमित्याशङ्क्याह—

**तत्र समवायिकारणम्, असमवायिकारणं निमित्तकारणं चेति त्रिविधम् ॥१०७॥**

यत्र समवेतं कार्यमुत्पद्यते तत्—'समवायिकारणम्' यथा पटस्य तन्तवः, समवायिकारणप्रत्यासन्नमवधृतसामर्थ्यम् 'असमवायिकारणम्' यथा तन्तूनां परस्परसंयोगः। 'निमित्तकारणम्' च तदुभयव्यतिरिक्तं कुविन्दवेमतुर्यादिकम्। एवं भेदा उक्ताः ॥१०७॥

**अपरे भेदाः स्वयमूहनीयाः ॥ १०८ ॥**

'अपरे भेदाः' सूक्ष्मा वस्तूनां प्रकाराः 'स्वयमूहनीयाः' स्वयमेव ज्ञातव्या इत्यर्थः ॥ १०८ ॥

एतेषां ज्ञानेन किं साध्यमित्याशङ्क्य प्रयोजनमाह—

**एतेषां तत्त्वज्ञानं निःश्रेयसहेतुः ॥ १०९ ॥**

---

१ 'च' नास्ति क, नि। २ अत्र निमित्तत्वमिति पद न कारणविशेषपरम्, किन्तु कारणसामान्यपरमिति बोध्यम्—सपादकः। ३ तत्त्व-क। ४ त्रिविध कारणम् नि। ५ अत्र अ २ पुस्तके पाठो न स्पष्टः। ६ सूत्रमिद अ. 1, अ २ प्रत्योर्नास्ति। ७ निःश्रेयसे क।

'एतेषां' पूर्वोक्तानां पदार्थानां 'तत्त्वज्ञानं,' यथाऽवस्थितस्वरूपावगमो 'निःश्रेयसहेतुः'-मोक्षकारणमित्यर्थः। अत एतेषां प्ररूपणं सप्रयोजकम् ॥१०९॥

तत्त्वज्ञानमित्युक्तम्, तत्त्वं किं नामेत्याशङ्क्याह—

**तत्त्वमनारोपितरूपम् ॥ ११० ॥**

अतस्मिंस्तदध्यवसाय आरोपस्तद्रहितं यद्वस्तुनः स्वरूपं तत् 'तत्त्वम्' ॥ ११० ॥

तस्य ज्ञानं किमुच्यते? इत्याशङ्क्याह—

**तस्य ज्ञानमनुभवः ॥ १११ ॥**

'तस्य' तत्त्वस्य 'ज्ञानम्' अनुभवः स्मृतिव्यतिरिक्तो बोधः ॥ १११ ॥

स च चतुर्विधो भवतीत्याह—

**स च श्रवण-मनन-निदिध्यासन-साक्षात्कारलक्षणश्चतुर्विधः ॥११२॥**

'श्रवणम्' आकर्णनं वस्तूनां शास्त्रेभ्यः स्वरूपाकर्णनम्। 'मननम्' युक्तिभिर्विचारणम्। 'निदिध्यासनम्' ध्यानम्। 'साक्षात्कारः' प्रत्यक्षावलोकनमिति अनुभवः चतुर्धा स्यादिति ॥ ११२ ॥

निःश्रेयसं तत्किमित्याह—

**निःश्रेयसं पुनस्तत्त्वज्ञानोत्पाद्यमिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावः ॥ ११३ ॥**

तत्त्वज्ञानेन सम्यगवबोधेन उत्पाद्यो योऽसौ मिथ्याज्ञानकारणानां प्रध्वंसः तेन सह समानाधिकरणः-एकनिष्ठः तत्कार्याणां मिथ्याज्ञानकार्याणां समस्तानां दुःखानां योऽभावस्तत् 'निःश्रेयसम्'। एतावता क्रमोऽयमुपदिष्टः। एतस्माच्छास्त्रात्पदार्थानां तत्त्वज्ञानम्। तस्माद् मिथ्याज्ञानकारणानि संशयविपर्ययादीनि प्रलीयन्ते। ततश्च मिथ्याज्ञानकार्याणां समस्तानां दुःखानामभावो भवति। तच्च निःश्रेयसम्। अतस्तत्त्वज्ञानं निःश्रेयसहेतुरिति।

अभावो निःश्रेयसमित्युक्ते घटाभावादावतिव्याप्तिः स्यात्तन्निरासाय 'दुःखाभावः' इति। तथोक्ते राजादीनां प्रतिकूलं दुःखं नास्ति, सोऽपि दुःखाभावो निःश्रेयसं स्यात्, अत उक्तं 'समस्ते'ति। समस्तदुःखाभावो निःश्रेयसमित्युक्ते घटादौ दुःखात्यन्ताभावोऽस्ति। तत्रातिव्याप्तिः स्यात्। तन्निरासार्थं 'मिथ्याज्ञानकारणप्रध्वंससमानाधिकरण'पदम्। घटादौ मिथ्याज्ञानकारणानां प्रध्वंसो जातो नास्ति। तथोक्ते असम्भवि लक्षणं मिथ्याज्ञान-

---

१ °रोपितम् नि। २ क्रमेण सह गदाधरः भ १ पा. टि.।

कारणानां प्रध्वंसे सति समस्तदुःखाभावस्यासम्बन्धित्वाद् असम्भवात्। तन्निरासाय 'तत्कार्ये'ति। मिथ्याज्ञानकारणे प्रध्वंसे मिथ्याज्ञानकार्याणि समस्तानि दुःखान्यपि प्रलीयन्ते इति सुसम्भवः। तथोक्ते प्रलयावस्थायामात्मसु व्यभिचारः स्यात् तत्रेश्वरेच्छया सर्वेऽप्यात्मानः शरीरादिदुःखरहिताः स्वरूपेणावतिष्ठन्ते। तन्निरासाय 'तत्त्वज्ञानोत्पाद्ये'ति। संहारावस्थायामीश्वरेच्छोत्पाद्यो भवति, न तु तत्त्वज्ञानोत्पाद्य इति। 'समानाधिकरण'पदं बौद्धाभिमतमोक्षनिरासार्थम्। तेषां हि मतेऽन्यस्य तत्त्वज्ञानमन्यस्य मिथ्याज्ञानकारणध्वंसोऽन्यस्य समस्तदुःखाभावः। तन्मतमपाकर्तुं समानाधिकरणमिति ॥११३॥

अथ समस्तं दुःखं कतिप्रकारमित्याशङ्क्याह—

**दुःखं तु शरीरं षडिन्द्रियाणि षड्विषयाः षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिप्रकारम् ॥११४॥**

'शरीरम्' भोगायतनम्। 'चक्षुः-श्रोत्र-रसन-स्पर्शन-घ्राण-मनोलक्षणानि षडिन्द्रियाणि'। शुभे रूपे पुनः पुनर्दिदृक्षा, अशुभे पुनः सर्वत्र जुगुप्सा १, शुभे रसे लौल्यम् २, शुभे गन्धे जिघ्रक्षा ३, शुभे शब्दे शुश्रूषा ४, पट्टकूलललनाङ्गनादिमृदुषु वस्तुषु स्पर्शनवाञ्छा ५, मनसा सुखाभिलाषः ६ इत्येते 'षड्विषयाः'[1]। षड्भिरिन्द्रियैरुत्पाद्या यास्ताः 'षड्बुद्धयः' इति एकोनविंशतिप्रकाराः। अनुकूलतया वेद्यं वैषयिकादिकं 'सुखम्'। प्रतिकूलतया वेद्यं गदाद्युत्पाद्यं 'दुःखम्' इत्येकविंशतिप्रकारकमपि दुःखं विवक्षितम्।

अत्र शरीरं दुःखायतनत्वाद् दुःखम्। षडिन्द्रियाणि, षड्विषयाः, षड्बुद्धयश्च दुःखहेतुत्वात् दुःखम्। दुःखं तु मुख्यत एव पीडासंतापात्मकम्। सुखं तु दुःखानुषङ्गात् दुःखमिति ॥११४॥

ईयता ग्रन्थेन प्रायो भेदा एवाभिहिताः ॥

अथ लक्षणाभिधित्सुरादौ संगतिमाह—

**इदानीं लक्षणाधीनत्वात्तत्त्वज्ञानस्य लक्षणमेवोच्यते ॥११५॥**

सम्प्रति 'लक्षणमेव' असाधारणधर्म एव सर्वेषां पदार्थानामुद्देशक्रमेण प्रतिपाद्यते। लक्षणप्रतिपादने को हेतुरित्याशङ्क्य कारणमाह—'तत्त्वज्ञानस्य' सम्यग्वस्तुपरिच्छेदस्य 'लक्षणाधीनत्वात्' वस्तुस्वरूपं लक्षणेन परिच्छिद्यते नोद्देशमात्रेणेति। तेन सर्वेषां पदार्थानां

---

१ प्यात्मनः ख. १। २ तद्विषयाः क.। ३ अत्र मितभाषिणीकारेण प्रकरणसमाप्तिः स्पष्टतया दर्शयितुं पृथक् श्लोक एव रचितः। मूले प्रकरणसमाप्त्यर्थं न किंचिदस्ति। 'क' पुस्तके 'इत्युद्देशप्रकरणम्' इत्यपि यद्दर्शितं तत्र प्रयोजनास्ति।

'एतेषां' पूर्वोक्तानां पदार्थानां 'तत्त्वज्ञान,' यथाऽवस्थितस्वरूपावगमो 'नि श्रेयसहेतु'-मोक्षकारणमित्यर्थः। अत एतेषां प्ररूपणं सप्रयोजकम् ॥१०९॥

तत्त्वज्ञानमित्युक्तम्, तत्त्वं कि नामेत्याशङ्क्याह—

**तत्त्वमनारोपितरूपम् ॥ ११० ॥**

अतस्मिंस्तदध्यवसाय आरोपस्तद्रहितं यद्वस्तुन· स्वरूपं तत् 'तत्त्वम्' ॥ ११० ॥

तस्य ज्ञान किमुच्यते ? इत्याशङ्क्याह—

**तस्य ज्ञानमनुभवः ॥ १११ ॥**

'तस्य' तत्त्वस्य 'ज्ञानम्' अनुभव स्मृतिव्यतिरिक्तो बोधः ॥ १११ ॥

स च चतुर्विधो भवतीत्याह—

**स च श्रवण-मनन-निदिध्यासन-साक्षात्कारलक्षणश्चतुर्विधः ॥११२॥**

'श्रवणम्' आकर्णनं वस्तूना शास्त्रेभ्य· स्वरूपाकर्णनम्। 'मननम्' युक्तिभिर्विचारणम्। 'निदिध्यासनम्' ध्यानम्। 'साक्षात्कार' प्रत्यक्षावलोकनमिति अनुभव· चतुर्धा स्यादिति ॥ ११२ ॥

नि·श्रेयस तत्किमित्याह—

**निःश्रेयसं पुनस्तत्त्वज्ञानोत्पाद्यमिथ्याज्ञानकारणप्रध्वंससमानाधिकरणतत्कार्यसमस्तदुःखाभावः ॥ ११३ ॥**

तत्त्वज्ञानेन सम्यगवबोधेन उत्पाद्यो योऽसौ मिथ्याज्ञानकारणाना प्रध्वंस· तेन सह समानाधिकरण -एकनिष्ठः तत्कार्याणां मिथ्याज्ञानकार्याणां समस्तानां दु खानां योऽभावस्तत 'नि श्रेयसम्'। एतावता क्रमोऽयमुपदिष्टः। एतस्माच्छास्त्रात्पदार्थानां तत्त्वज्ञानम्। तस्माद् मिथ्याज्ञानकारणानि संशयविपर्ययादीनि प्रलीयन्ते। ततश्च मिथ्याज्ञानकार्याणा समस्ताना दु खानामभावो भवति। तच्च नि श्रेयसम्। अतस्तत्त्वज्ञानं नि श्रेयसहेतुरिति।

अभावो निःश्रेयसमित्युक्ते घटाभावादावतिव्याप्ति स्यात्तन्निरासाय 'दु खाभाव' इति। तथोक्ते राजादीना प्रतिकूलं दु खं नास्ति, सोऽपि दु खाभावो नि श्रेयस स्यात्, अत उक्तं 'समस्ते'ति। समस्तदु खाभावो नि श्रेयसमित्युक्ते घटादौ दु खात्यन्ताभावोऽस्ति। तत्रातिव्याप्ति· स्यात्। तन्निरासार्थं 'मिथ्याज्ञानकारणप्रध्वंससमानाधिकरण'पदम्। घटादौ मिथ्याज्ञानकारणानां प्रध्वंसो जातो नास्ति। तथोक्ते असम्भवि लक्षणं मिथ्याज्ञान-

---

१ °रोपितम् नि। २ प्र·ध्वंसेन सह सहनाधय· अ १ पा. टि.।

-भिद्यते इति न, किन्तु भिद्यत एव । तथा गुण इतरेभ्यो भिद्यते द्रव्यकर्मादिभ्यो भिन्नो भवितुमर्हति जातिमत्त्वेऽचलनात्मकत्वे सति समवायकारणरहितत्वात्। यन्नैवं न तदेवं यथा द्रव्यम् । उपनयनिगमने पूर्ववत् । तथा कर्म इतरेभ्यो भिद्यते आद्यसंयोगविभागा-समवायिकारणत्वादित्यादिप्रकारेण यावन्ति लक्षणानि सन्ति तानि हेतवः क्रियन्ते । 'इतरेभ्यो भिद्यते' इत्येव साध्यते, लक्ष्याणि सर्वाण्यपि पक्षीक्रियन्ते । इति सर्वेषु लक्षणेषु द्रष्टव्यम् ॥११८॥

अथ येनैव क्रमेणोद्देशः कृतस्तेनैव क्रमेण लक्षणानि वक्तव्यानि । तेन पूर्वं प्रति-पादितस्य पदार्थस्य लक्षणं वक्तव्यमित्याशङ्क्याह—

**तत्र पदार्थलक्षणं कृतमेव ॥ ११९ ॥**

तत्र सर्वेषां लक्षणावसरे पदार्थलक्षणं वक्तव्यम्, परं तत् 'प्रमितिविषयः' इत्यनेन कृतमेवेति न पुनरुच्यते ॥११९॥

अथ प्रथमपदार्थस्य द्रव्यस्य लक्षणमाह—

**द्रव्यं द्रव्यत्वसामान्ययोगि ॥ १२० ॥**

सर्वेषु पृथिव्यादिषु 'द्रव्यं द्रव्यम्' इत्यनुवृत्तिप्रत्ययहेतुभूतं द्रव्यत्वं सामान्यम्, तेन सह सम्बन्धः समवायलक्षणो योगो विद्यते यस्य तत् 'द्रव्यत्वसामान्ययोगि' इत्येकं लक्षणम् ॥१२०॥

ननु द्रव्यत्वं तदा ज्ञायते यदि केनचिदसाधारणधर्म्मेण द्रव्यमितरेभ्यो भिन्नमवगतं स्यात् तेनानेन लक्षणेन द्रव्यस्य न तत्त्वज्ञानं स्फुटं स्यादित्याशङ्क्य लक्षणान्तरे द्वे आह—

**गुणवत्समवायिकारणं चेति ॥ १२१ ॥**

गुणाः समवेता विद्यन्ते यस्मिंस्तत् 'गुणवत्'। चतुर्विंशतिगुणमध्ये यत्राऽन्यतरः कोऽपि गुणो भवति तद् द्रव्यम् । ननु "उत्पन्नं द्रव्यं क्षणमगुणं तिष्ठेत्" इति सिद्धान्तवाक्यम्। क्षणमगुणे द्रव्ये गुणवत्त्वस्यावर्त्तनादव्यापकं लक्षणमेतद् इति चेत्, नैवम्, गुणवदिति पदस्यायमर्थो गुणवत्त्वात्यन्ताभावाभावो गुणवत्त्वं, तच्चास्त्येव भविष्यतो गुणस्य तत्र सत्त्वादिति ।

द्वितीयं लक्षणम्—यत्र समवेतं कार्यमुत्पद्यते तत् 'समवायिकारणम्'। अभाववर्जानां सर्वेषां कार्याणां द्रव्यसमवेतत्वेनैवोत्पाद्यत्वात्तदेव समवायिकारणं स्यादिति तृतीयं लक्षणम्। 'च'शब्दोऽत्र पूर्वलक्षणाद् भिन्नत्वसूचनार्थः। 'इति'शब्दो द्रव्यलक्षणसमाप्त्यर्थः ॥१२१॥

१ पदार्थसामान्यलक्षण क, नि । २ तृतीयलक्षण अ. १ ।

सङ्कलितान्येव तानि कथ्यन्ते। एकवचनं सूत्रे जात्यपेक्षायां यथा निष्पन्नो व्रीहिः। अथवा प्रतिपदार्थमेकमेकं लक्षणमभिधास्यते प्रायो न सर्वाणीति सूत्रार्थः ॥११५॥

ननु लक्षणस्य लक्षणेन तत्त्वं ज्ञायते, अन्यथैव वा? अन्यथैव चेत्; तद्वदपरेषामपि तत्त्वं ज्ञास्यते, किं लक्षणप्रयोगेण?[1] लक्षणेनेति चेत्; तत्किमित्याशङ्क्य लक्षणस्य लक्षणमाह—

**केवलव्यतिरेकी हेतुविशेषो लक्षणम् ॥११६॥**

लक्ष्यव्यतिरिक्ते वस्तुनि यो नियतं न वर्त्तते, लक्ष्ये च व्याप्य वर्तेत स धर्मो 'लक्षणम्'। हेतुविशेषो लक्षणमित्युक्ते केवलान्वयी हेतुरपि लक्षणं स्यात्। तन्निवृत्त्यर्थं 'व्यतिरेकी'ति। तथोक्तेऽन्वयव्यतिरेकिणि व्यभिचारस्तन्निवृत्त्यर्थं 'केवले'ति ॥११६॥

ननु यो हेतुः स पञ्चावयवेन वाक्येन प्रतिपाद्यते। परस्य तल्लक्षणं हेतुविशेष इत्युक्तम्। तत्कथं पञ्चावयवेन वाक्येन[2] प्रतिपाद्यत इत्याशङ्क्य प्रयोगविधिमाह—

**प्रयोगस्तु लक्षणमितरेभ्यो भिद्यते केवलव्यतिरेकिहेतुविशेषवचनत्वात्[3]। यदितरेभ्यो न भिद्यते तत्केवलव्यतिरेकिहेतुविशेषवचनमपि[4] न भवति यथा धूमवत्त्वम्[5]। न च तथेदं[6] केवलव्यतिरेकिहेतुविशेषवचनं न भवति[7]। तस्मादितरेभ्यो न भिद्यत इति न, किन्तु भिद्यत एव ॥११७॥**

'लक्षणं' पक्षः। 'इतरेभ्यः' लक्षणव्यतिरिक्तेभ्यो 'भिद्यते' भेदं प्राप्नोति भिन्नं भवतीति साध्यो धर्मः। लक्षणव्यतिरिक्ताश्च सर्वे विपक्षा इति सपक्षो नास्ति। लक्षणव्यतिरिक्ता ये केवलान्वयि अन्वयव्यतिरेकिहेतवो ये चाऽन्येऽपि पदार्थास्ते इतरेभ्यो लक्षणव्यतिरिक्तेभ्यो न भिद्यन्त इति न, किन्तु लक्षणव्यतिरिक्ता एव भवन्ति। 'धूमवत्त्वं' हि अन्वयव्यतिरेकि। शेषं स्पष्टम् ॥११७॥

**एवं सर्वत्रापि[8] लक्षणे प्रयोगो द्रष्टव्यः ॥११८॥**

'एवम्' अनया पद्धत्या सर्वस्मिन् 'लक्षणे' पञ्चावयवं वाक्यं प्रयोक्तव्यम्। कथम्? यल्लक्ष्यं भवति स पक्षः क्रियते यच्च लक्षणं स हेतुर्दीयते, लक्ष्यव्यतिरिक्तश्च व्यतिरेकव्याप्तिपूर्वको दृष्टान्त उच्यते। यथा 'द्रव्यमितरेभ्यो भिद्यते गुणवत्त्वात्', यदितरेभ्यो न भिद्यते तद् गुणवदपि न, यथा गुणः, न च तथेदं गुणवन्न भवति; तस्मादितरेभ्यो न

---

१ लक्षणेन चेत् अ. १। २ °वयवेन ॥॥ प्रतिपाद्यते अ. २। ३ विशेषत्वात् क। ४ विशेषोऽपि क। ५ म्। तथा चेद क नि। ६ 'इद' लक्षणलक्षण 'तथा' धूमवत्त्ववत् केवलव्यतिरेकिहेतुविशेषवचन न भवतीति न अ. १ पा टि.। ७ विशेषो न भवतीति न क। ८ सर्वत्र ल°-क नि.।

समवायाऽभावयोर्व्यवच्छेदः, तयोरसमवेतत्वात् । 'एकद्रव्यवृत्तिः' इत्यनेन सामान्यस्यापि व्यवच्छेदः, सामान्यस्य द्रव्य-गुण-कर्मवृत्तित्वेन द्रव्यमात्रवृत्त्यनियमात्, द्रव्यत्वस्य च बहुद्रव्यवृत्तित्वादिति ॥ १२६ ॥

**नित्यः सम्बन्धः समवायः ॥ १२७ ॥**

सम्बन्धौ द्वावेव स्तः संयोगः समवायो वा । 'सम्बन्धः' इत्यनेनाऽपरेषां सर्वेषां निरासः । 'नित्य'पदेन संयोगस्य ॥ १२७ ॥

**प्रतियोगिज्ञानाधीनज्ञानोऽभावः ॥ १२८ ॥**

'प्रतियोगी' विरोधी यथा घटाभावस्य घटः, तस्य ज्ञानं परिच्छेदः, तदधीनं तदायत्तं ज्ञानं यस्य स 'प्रतियोगिज्ञानाधीनज्ञानः' । प्रतियोगी यदि पूर्वं ज्ञातः स्यात्तदैव तदभावो ज्ञायते नाऽन्यथेति भावः ॥ १२८ ॥

एवं सप्तानां लक्षणमाख्याय येनैव क्रमेणैतेषां भेदा उक्तास्तेन क्रमेणैव लक्षणान्यप्याह—

**पृथिवीत्वसामान्यवती गन्धवती पृथिवी ॥ १२९ ॥**

लोष्टेष्टिकामृदादिषु 'पृथिवी' 'पृथिवी' इत्यनुवृत्तिप्रत्ययहेतुभूतं पृथिवीत्वं सामान्यम् । तद्वती 'पृथिवी' इत्येकं लक्षणम् । अनया पद्धत्या सर्वत्राग्रे व्याख्या स्वस्वसामान्यप्रयोगे कर्त्तव्या । गन्धो घ्राणेन्द्रियग्राह्यो गुणो विद्यते यस्याः सा 'गन्धवती' । गन्धस्य पृथिवीं व्याप्य वर्त्तनात् तां परित्यज्यान्यत्र काप्यवर्त्तनात् ॥ १२९ ॥

**अप्त्वजातिमत्यः शीतस्पर्शा आपः ॥ १३० ॥**

एकं लक्षणं स्वस्वसामान्यप्रयोगेणात्राकारि । द्वितीयं तदपरेणासाधारणधर्म्मकथनेन । शीतः शीतलः स्वाभाविकः स्पर्शो यासां ताः 'शीतस्पर्शाः' । शीतस्पर्शस्यान्यत्र काप्यवर्त्तनादन्येषां निरासः ॥ १३० ॥

**तेजस्त्वजातियोगि उष्णस्पर्शं तेजः ॥ १३१ ॥**

उष्णस्पर्शस्यान्यत्र क्वाप्यवर्त्तनादन्येभ्यो व्यावृत्तिः । शेषं स्पष्टम् ॥ १३१ ॥

**वायुत्वजातियोगी अरूपः स्पर्शवान् वायुः ॥ १३२ ॥**

आद्यं कण्ठ्यम् । अरूपो वायुरित्युक्ते गगनादौ व्यभिचारस्तन्निरासाय 'स्पर्शवान्' इति । स्पर्शवान् वायुरित्युक्ते पृथिव्यप्तेजस्स्वतिव्याप्तिस्तन्निवृत्त्यै 'अरूप' इति ॥१३२॥

१ नित्यस' नि. । २ 'न्यवती पृथिवी क 'न्यवती गन्धवती च पृ' नि । ३ शीतस्पर्शत्वस्य आ' क. नि । ४ स्पर्शवत्तेजः क. नि । ५ अरूपस्वः क नि अ. २ ।

गुणलक्षणमाह—

**गुणत्वजातियोगी गुणः ॥ १२२ ॥**

'गुण' जातिसामान्ये एकोऽर्थः । शेषं पूर्ववत् ॥१२२॥

स्फुटप्रतीतिजनकं लक्षणान्तरमाह—

**जातिमत्त्वेऽचलनात्मकत्वे सति समवायिकारणरहितश्चेति ॥१२३॥**

'जातिमत्त्वे सति' इत्युक्तेन सत्तारहितानां सामान्यविशेषसमवायाऽभावानां व्युदासः । 'अचलनात्मकत्वे सति' इत्यनेन कर्म्मणां निरासः । 'समवायिकारणरहित' इत्यनेन द्रव्यस्य । 'च' इति शब्दः पूर्ववत् ॥१२३॥

**कर्म्म कर्म्मत्वजातियोगि, आद्यसंयोगविभागासमवायिकारणं चेति ॥ १२४ ॥**

संयोगविभागौ द्विविधावुक्तौ। तयोर्यावाद्यौ कर्म्मजसंयोगविभागौ तयोर्यदसमवायिकारणं तत् 'कर्म' । 'कारणं कर्म्म' इत्युक्ते व्यभिचारो द्रव्यादौ, तन्निरासार्थम् 'असमवायिकारणम्' इति । द्रव्यसामान्यविशेषसमवायाऽभावाख्याः पञ्च पदार्था असमवायिकारणं न स्युरिति तन्निरासः । तथोक्ते परमाणुरूपं द्व्यणुकरूपस्यासमवायिकारणं स्यादिति प्रसक्तिः, तन्निरासाय 'संयोगविभागाऽसमवायिकारणम्' इति । तथापि संयोगजसंयोग-विभागजविभागयोरसमवायिकारणं संयोगविभागौ भवतः, तत्रातिव्याप्तिः, तद्व्यवच्छेदार्थम् 'आद्य' इति ॥१२४॥

**सामान्यं नित्यमेकमनेकसमवेतम्[१] ॥ १२५ ॥**

'समवेतम्' इत्यनेन समवायाभावनित्यद्रव्याणामसमवेतानां व्युदासः । 'अनेकसमवेतम्' इत्युक्तेन विशेषाणां कर्म्मणां रूपादीनां गुणानां च, तेषामेकमात्रसमवेतत्वात् । 'नित्यम्' इत्यनेन कार्यद्रव्यसंयोगविभागद्वित्वद्विपृथक्त्वादीनां निरासः । अनेके सन्तो विशेषा अप्यनेकसमवेताः स्युरिति तत्रातिप्रसक्तिः, तन्निरासाय एकमिति । केचित्—स्वरूपपरमेवैतत्पदं व्यवच्छेद्याभावेऽपि रांभस्यात्[३] प्रयुक्तमित्याहुः ॥१२५॥

**विशेषस्तु सामान्यरहित एकद्रव्यवृत्तिः[४] ॥ १२६ ॥**

एकैकस्मिन्नेव द्रव्ये एव समवायलक्षणा वृत्तिर्यस्य स 'एकद्रव्यवृत्तिः' । 'सामान्यरहित' इत्यनेन द्रव्यगुणकर्म्मणां व्युदासः तेषां सामान्यवत्त्वात् । 'द्रव्यवृत्ति' इत्यनेन

१ गुणस्तु गुणत्वजातियोगी क नि । २ विभागयोरसमवायि क, नि । ३ राभसात् अ १ । ४ वेत च नि । ५ एकव्यक्ति क, नि ।

समवायाऽभावयोर्व्यवच्छेदः, तयोरसमवेतत्वात् । 'एकद्रव्यवृत्तिः' इत्यनेन सामान्यस्यापि व्यवच्छेदः, सामान्यस्य द्रव्य-गुण-कर्मवृत्तित्वेन द्रव्यमात्रवृत्त्यनियमात्, द्रव्यत्वस्य च बहुद्रव्यवृत्तित्वादिति ॥ १२६ ॥

## नित्यः सम्बन्धः समवायः ॥ १२७ ॥

सम्बन्धौ द्वावेव स्तः संयोगः समवायो वा । 'सम्बन्धः' इत्यनेनाऽपरेषां सर्वेषां निरासः । 'नित्य'पदेन संयोगस्य ॥ १२७ ॥

## प्रतियोगिज्ञानाधीनज्ञानोऽभावः ॥ १२८ ॥

'प्रतियोगी' विरोधी यथा घटाभावस्य घटः, तस्य ज्ञानं परिच्छेदः, तदधीनं तदायत्तं ज्ञानं यस्य स 'प्रतियोगिज्ञानाधीनज्ञानः' । प्रतियोगी यदि पूर्वं ज्ञातः स्यात्तदैव तदभावो ज्ञायते नाऽन्यथेति भावः ॥ १२८ ॥

एवं सप्तानां लक्षणमाख्याय येनैव क्रमेणैतेषां भेदा उक्तास्तेन क्रमेणैव लक्षणान्यप्याह—

## पृथिवीत्वसामान्यवती गन्धवती पृथिवी ॥ १२९ ॥

लोष्टेष्टिकामृदादिषु 'पृथिवी' 'पृथिवी' इत्यनुवृत्तिप्रत्ययहेतुभूतं पृथिवीत्वं सामान्यम् । तद्वती 'पृथिवी' इत्येकं लक्षणम् । अनया पद्धत्या सर्वत्राग्रे व्याख्या स्वस्वसामान्यप्रयोगे कर्त्तव्या । गन्धो घ्राणेन्द्रियग्राह्यो गुणो विद्यते यस्याः सा 'गन्धवती' । गन्धस्य पृथिवीं व्याप्य वर्त्तनात् तां परित्यज्यान्यत्र काप्यवर्त्तनात् ॥ १२९ ॥

## अप्त्वजातिमत्यः शीतस्पर्शा आपः ॥ १३० ॥

एकं लक्षणं स्वस्वसामान्यप्रयोगेणात्राकारि । द्वितीयं तदपरेणासाधारणधर्म-कथनेन । शीतः शीतलः स्वाभाविकः स्पर्शो यासां ताः 'शीतस्पर्शाः' । शीतस्पर्शस्यान्यत्र काप्यवर्त्तनादन्येषां निरासः ॥ १३० ॥

## तेजस्त्वजातियोगि उष्णस्पर्शं तेजः ॥ १३१ ॥

उष्णस्पर्शस्यान्यत्र क्वाप्यवर्त्तनादन्येभ्यो व्यावृत्तिः । शेषं स्पष्टम् ॥ १३१ ॥

## वायुत्वजातियोगी अरूपः स्पर्शवान् वायुः ॥ १३२ ॥

आद्यं कण्ठ्यम् । अरूपो वायुरित्युक्ते गगनादौ व्यभिचारस्तन्निरासाय 'स्पर्शवान्' इति । स्पर्शवान् वायुरित्युक्ते पृथिव्यप्तेजस्स्वतिव्याप्तिस्तन्निवृत्त्यै 'अरूपः' इति ॥१३२॥

---

१ नित्यस° नि. । २ °न्यवती पृथिवी क °न्यवती गन्धवती च पृ° नि । ३ शीतस्पर्शवत्य आ° क. नि । ४ स्पर्शवत्तेजः क. नि । ५ अरूपस्तः क नि अ. २ ।

## शब्दगुणमाकाशम् ॥ १३३ ॥

शब्दो गुणो यस्मिंस्तत 'शब्दगुणम्'। शब्दश्चाकाशसत्त्वे लिङ्गम्। कथम्? शब्द क्वचिदाश्रितो गुणत्वाद् रूपवत्। नाऽय हेतुरसिद्ध, गुणत्वस्य पुरापि साधितत्वात्। नाऽय सामान्यगुण, एकेन्द्रियमात्रेणाधिगम्यमानसामान्यवत्त्वात्। नाऽय स्पर्शवता विशेषगुण प्रत्यक्षत्वे सति अकारणगुणपूर्वकत्वात्, अयावद्द्रव्यभावित्वाद्वा, आश्रयादन्यत्रोपलम्भाद्वा। नाप्ययमात्मगुणो बाह्येन्द्रियग्राह्यत्वादात्मान्तरग्राह्यत्वाद्वा रूपवत्। नाऽप्यय दिक्कालमनसा गुणो विशेषगुणत्वात्। अथ परिशेषादय शब्दो विशेषगुणो यत्र समवेतस्तदाकाशम् ॥ १३३ ॥

## आदित्यपरिवर्त्तनोत्पाद्यपरत्वापरत्वाऽसमवायिकारणाधारः परत्वापरत्वाऽनधिकरणं कालः ॥ १३४ ॥

आदित्यस्य सूर्यमण्डलस्य मेरु प्रदक्षिणीकृत्य य परिवर्त्तन परिभ्रमण तेनोत्पाद्ये ये परत्वाऽपरत्वे, यस्मिन् जाते बह्व्यादित्यपरिवर्त्तनानि जातानि भवन्ति तत्र पिण्डे अपेक्षाबुद्धे सकाशात्परत्वमुत्पद्यते, यस्मिंश्च तान्यल्पानि तत्रापरत्वम्। तस्माद् द्वयोर्भेदप्रत्यायके कालकृते ये परत्वापरत्वे ते आदित्यपरिवर्त्तनोत्पाद्ये उच्येते। तयो परत्वापरत्वयोर्यत् समवायिकारण कालपिण्डसयोगस्तस्याधार स्थानम्। परत्वापरत्वयोरनधिकरणमनाधार। परत्वापरत्वे मूर्त्तद्रव्येष्वेव भवतो नामूर्त्ते। कालश्चामूर्त्त तस्मात्तयोरनधिकरणम्। परत्वाऽपरत्वानधिकरण काल इत्युक्तेऽमूर्त्तव्योमादौ व्यभिचारस्तद्व्यवच्छेदार्थं 'परत्वाऽपरत्वाऽसमवायिकारणाधार' इति। तथोक्ते दिशि व्यभिचारस्तन्निरासाय आदित्यपरिवर्त्तनोत्पाद्य' पदम्। 'आदित्यपरिवर्त्तनोत्पाद्यपरत्वाऽपरत्वासमवायिकारणाधार काल' इत्युक्ते पुरुषादिपिण्डेऽतिप्रसक्ति, तत्राऽपि परत्वाऽपरत्वाऽसमवायिकारणस्य कालपिण्डसयोगस्योभयनिष्ठत्वेनाश्रितत्वात्, तन्निरासाय 'परत्वापरत्वाऽनधिकरणम्' इति। स पिण्ड परत्वाधिकरणमेव स्यादिति ॥ १३४ ॥

## आदित्यसयोगानुत्पाद्यपरत्वापरत्वाऽसमवायिकारणाधारः परत्वाऽपरत्वानधिकरण दिक् ॥ १३५ ॥

आदित्यसयोगनिरपेक्षे ये देशविभागप्रत्यायके परत्वापरत्वे तयोर्यदसमवायिकारण दिक्पिण्डसयोगस्तस्याधार। शेष पूर्ववत्।

आकाशकालदिशा वास्तवैक्यादाकाशत्व कालत्व दिक्त्वलक्षणानि सामान्यानि न सन्ति, सामान्यस्य बहुनिष्ठत्वात्। तेनैतषा सामान्यकथनेन लक्षणानि नोक्तानि ॥१३५॥

१ प्रदक्षिणीकृत्य म १। २ आधारस्थानम् म. १।

**आत्मत्वसामान्यवान् बुद्धिगुणाश्रय आत्मा ॥ १३६ ॥**

बुद्धिगुणस्य ज्ञानस्याश्रय आस्थानयोग्यो यः स 'आत्मा' । मुक्तात्मा समुच्छिन्न-बुद्धिगुणो यद्यपि भवति परं पूर्वं संसारावस्थायां बुद्धिगुणस्याश्रयः स्यादिति नाऽव्याप्तिः । आश्रय आत्मा इत्युक्ते सामान्याश्रयत्वेन गुणादावतिव्याप्तिः, तन्निवृत्त्यै 'गुणाश्रयः' इति । तथोक्ते घटादौ व्यभिचारः, तदुच्छित्त्यै 'बुद्धी'ति । आत्मसत्त्वे च बुद्धिः लिङ्गम् । कथम् ? बुद्धिः क्वचिदाश्रिता गुणत्वाद् रूपवत् । न चेयं शरीराश्रिता घटादिवद्भूतकार्यत्वात्, मृते चाऽसम्भवात्; विशेषगुणत्वे सति अयावद्द्रव्यभावित्वाद्वा, प्रदेशवृत्तित्वाद्वा । नापीन्द्रि-याश्रिता तेषां करणत्वात् । यच्च करणं तन्न चैतन्याश्रयो यथा कुठारः । नापि मनसाश्रिता, विशेषगुणत्वात् । तस्माद् यत्रेयमाश्रिता सोऽहमितिप्रतीतिगोचर आत्मेति ॥ १३६ ॥

**मनस्त्वजातियोगि स्पर्शशून्यं क्रियाधिकरणं मनः ॥ १३७ ॥**

क्रिया कर्म गमनादिक तस्याऽधिकरणमाधारः । 'स्पर्शशून्यम्' इत्यनेन पृथिव्या-दीनां निरासः । क्रियाधिकरणपदेन व्योमादीनां सर्वेषाममूर्तानां निरासः, क्रियाया मूर्ते-ष्वेव भावात् ॥ १३७ ॥

गुणभेदान् लक्षयति —

**रूपत्वजातिमच्चक्षुर्मात्रग्राह्यो गुणो रूपम् ॥ १३८ ॥**

रूपेषु सितासितलोहितादिरूपेषु 'रूपम्' 'रूपम्' इत्यनुवृत्तिप्रत्ययहेतुभूतं रूपत्वं जातिः, तया सहितं यत्तद् 'रूपम्' इत्येकं लक्षणम् । यो गुणः षट्स्वपीन्द्रियेषु केवलं चक्षुषैव गृह्यते दृश्यते तद् रूपम् । गुणो रूपमित्युक्ते धर्माधर्मादावतिप्रसक्तिः । तन्निवृत्त्यै 'चक्षुर्ग्राह्यः' इति । तथोक्ते सङ्ख्यादावतिप्रसङ्गः, तन्निरासाय 'मात्रे'ति । सङ्ख्यादयस्तु चक्षुर्मात्रग्राह्या न भवन्ति, तेषां स्पर्शनेनाऽपि गृह्यमाणत्वात् । 'गुणः' इति पदं रूपत्व-सामान्यव्यवच्छेदार्थम् । ननु परमाणुगतं रूपं चक्षुर्मात्रग्राह्यो गुणो न स्यात्, तस्यानु-मेयत्वात् । तस्मात्तत्राव्यापकं लक्षणमेतदिति चेत् । न, 'मात्र'शब्दस्य इन्द्रियान्तरग्राह्यत्व-निरासार्थत्वान्न पुनरनुमेयत्वनिरासार्थम् । परमाणुगतं रूपमपि यदीन्द्रियेण गृह्येत तदा चक्षुषैव, न स्पर्शनादिनेन्द्रियान्तरेण । तन्नाव्यापकमेतदिति ॥ १३८ ॥

**रसत्वजातियोगी रसनग्राह्यो गुणो रसः ॥ १३९ ॥**

रसनस्य जिह्वेन्द्रियस्यैव ग्राह्यो ग्रहणयोग्यो यो गुणः स 'रसः' । व्यावृत्तिः प्रायः प्राग्वत् कार्या । अत्र 'मात्र'शब्दो व्यभिचाराभावात् न प्रयुक्तः, सङ्ख्यादीनां रसना-

ऽग्राह्यत्वात् ॥ १३९ ॥

**गन्धत्वजातियोगी घ्राणग्राह्यो गुणो गन्धः ॥ १४० ॥**

घ्राणग्राह्यो गन्ध इत्युक्ते गन्धत्वे सामान्येऽतिप्रसक्तिस्तदुच्छेदाय 'गुण' इति ॥१४०

**स्पर्शत्वजातियोगी स्पर्शनमात्रग्राह्यो गुणः स्पर्शः ॥ १४१ ॥**

पञ्चस्वपीन्द्रियेषु केवलेन स्पर्शनेन यो गुणो गृह्यते स 'स्पर्श'। गुण स्पर्श इत्युक्ते रूपमपि स्पर्श स्यात्। तन्निरासाय 'स्पर्शनग्राह्य' इति। तथोक्ते सङ्ख्यादावतिव्याप्तिस्तन्निरासाय मात्रेति, तथा चक्षुषापि ग्रहणात्। गुणग्रहण स्पर्शत्वनिवृत्त्यर्थम् ॥ १४१ ॥

**सङ्ख्यात्वसामान्यवती गणनाऽसाधारणं कारणं सङ्ख्या ॥१४२॥**

कारण द्विविध साधारणमसाधारण च। तत्र साधारण कारण बहुषु सजातीयविजातीयकार्येषु हेतुभूत यथा सर्वासा वनस्पतिजातीना पृथिव्यादि। असाधारण पुन प्रतिनियतविशिष्टकार्योत्पादक मुख्यतया यथा यवाङ्कुरोत्पत्तौ यवबीजम्। तत्रैकद्वित्रिचतु पञ्चषड्सप्तादिका गणना, तस्या असाधारण कारण यत् सा 'सङ्ख्या'। गणनाकारण पुरुषादयोऽपि भवन्ति तन्निवृत्त्यर्थमसाधारणमिति ॥ १४२ ॥

**परिमाणत्वसामान्ययोगि मानव्यवहारासाधारणं कारण परिमाणम् ॥**

अङ्गुलप्रमाण वस्त्वेतत्, हस्तप्रमाणं वस्त्रमेतत्, पुरुषप्रमाणोऽय दण्ड, योजनप्रमाणोऽय मार्ग, योजनशतप्रमाणोऽय देश, योजनसहस्रप्रमाणोऽय मत्स्य, योजन लक्षप्रमाणोऽय मेर, अमितप्रमाण व्योमेत्यादिको येन गुणेन परिमाणव्यवहारो भवति तत्परिमाणम् ॥ १४३ ॥

**पृथक्त्वजातियोगि पृथग्व्यवहाराऽसाधारण कारण पृथक्त्वम् ॥१४४॥**

पटात् घट पृथक्, घटात्पट इत्यादिको येन गुणेन व्यवहारो वचनोल्लापादि स्यात्तत्पृथक्त्वम्। ननु पृथक्त्व गुण पृथक्त्वत्व जाति सम्भवति रूप रूपत्ववदिति चेत्। न, भावे भावप्रत्यययाऽसम्भवात्। अतोऽनुद्दिष्टस्यापि त्वप्रत्ययस्यात्राधिगम ॥ १४४ ॥

**संयोगत्वसामान्यवान् अनित्यः सम्बन्धः संयोगः ॥ १४५ ॥**

स्वावयवव्यापिनोर्युतसिद्धयोर्द्वयोर्द्रव्ययोर्मूर्त्तयोर्मूर्त्तामूर्त्तयोर्वा योऽनित्य सम्बध स्यात् स सयोग। सम्बन्धपद घटादिनिवृत्त्यर्थम्। अनित्यपद समवायनिवृत्त्यर्थम् ॥१४५॥

---

१ स्पर्शं अ. १। २ अ १-अ २ प्रत्यारग्रागुद्ध एव पाठ–तन्निरस्याय स्त –अ १। तन्निरस्यार्थ स अ २। ३ °न्यवती सङ्ख्या गण° क। ४ °त्वजातियोगि क नि.।

**विभागत्वसामान्यवान् विभक्तव्यवहाराऽसाधारणं कारणं विभागः ॥ १४६ ॥**

मिलितयो द्वयो द्रव्ययो पृथक्करणावसरे 'विभक्तावेतौ' इति येन गुणेन व्यवहार स्यात् स विभाग ॥ १४६ ॥

**परत्वसामान्ययोगि परत्वव्यवहाराऽसाधारणं कारणं परत्वम् ॥१४७॥**

स्थविरे पुरुषे युवानमवधीकृत्य वलीपलितकार्कश्यादिसान्निध्यात् कालेन विप्रकृष्टो ऽयम्' इति परव्यवहारो भवति । तथा विदूरदेशस्थे वस्तुनि आसन्नमवधि कृत्वा 'अस्मा द्विप्रकृष्टमिदम्' इति परव्यवहारो भवति । तयोर्व्यवहारयोर्यदसाधारण कारण तत् 'परत्वम्' इति ॥ १४७ ॥

**अपरत्वसामान्ययोगि अपरव्यवहारासाधारणं कारणमपरत्वम् ॥१४८**

सुगमम् । ननु परत्वापरत्वत्वे जाती सम्भवत न परत्वाऽपरत्वे, तयोर्गुणत्वात्, तत्कथ तयोपन्यास इति चेत् ? सत्यम्, पर भावे भावप्रत्ययासम्भवादिति प्रागुक्त मेवोत्तरम् ॥ १४८ ॥

**बुद्धित्वसामान्यवती आत्माश्रयः प्रकाशो बुद्धिः ॥ १४९ ॥**

आत्मा आश्रय स्थान यस्य स 'आत्माश्रय' । अज्ञानान्धकारतिरस्कारकारक सकलपदार्थसार्थप्रकाशक प्रदीप इव देदीप्यमानो य 'प्रकाश' सा 'बुद्धि' इति । प्रकाशो बुद्धिरित्युक्ते मार्तण्डमण्डलालोकादौ व्यभिचार तन्निरासाय 'आत्माश्रय' इति । प्रकाशपद सुखादिनिवृत्त्यर्थम् ॥ १४९ ॥

**सुखत्वसामान्यवन्निरुपाध्यनुकूलवेद्यं सुखम् ॥ १५० ॥**

अनुकूलत्वेन प्रमोदमेदुरत्वेनाऽनुभूयते मनसा संवेद्यते यत् तत् 'अनुकूलवेद्यम्' । विषया ह्यनुकूलत्वेन संवेद्यन्ते मोहावष्टब्धमनोभिरात्मभि । अतस्तेऽपि सुख स्यु । तन्निवृत्त्यर्थमुक्त 'निरुपाधि' इति । विषयास्तूपाधिरूपेण मोहादिनैवानुकूलवेद्या स्यु पर तत्त्वज्ञान सुमुत्पन्ने विगतमोहादिमल शुद्धस्फटिक इव समुज्ज्वलो नानादुर्योनिसम्भूतप्रभूतदुःखदायकान् विषयान् विषसन्निभानव पश्यति नानुकूलान्, तस्माद्योगजधर्मानुग्रहादात्मनि य परमाह्लादो भवत् तत्सुखम् ॥ १५० ॥

**दुःखत्वसामान्यवत् निरुपाधि प्रतिकूलवेद्यं दुःखम् ॥ १५१ ॥**

१ °कप्रत्यय° क. नि । २ °मवधिकृत्वा अ १ । ३ न परत्वे तयो° अ १ । ४ सामान्यवान् अ १ । ५ स्थानं अ १ । ६ ननु विषया अ २ ।

'दुःखं' प्रतिकूलमसमाधानरूपं वेद्यते यत् तत् 'प्रतिकूलवेद्यम्' । महामोहमोहितमनोभिरात्मभिस्तपश्चरणादिकं प्रतिकूलं वेद्यते अतस्तदपि स्यात् । तन्निवृत्त्यर्थं 'निरुपाधि' इत्युक्तम् । तत्तूपाधिरूपेण मोहादिनैव तथा वेद्यते न स्वभावात् ॥ १५१ ॥

**इच्छात्वसामान्यवती अर्थित्वलक्षणा इच्छा ॥ १५२ ॥**

अर्थित्वमभिलापस्तदेव लक्षणं स्वरूपं यस्याः सा अर्थित्वलक्षणा । एतावता काम-मोह-लोभ-दम्भ-कारुण्य-वैराग्यादयोऽपि इच्छाभेदा एव ॥ १५२ ॥

**द्वेषत्वजातिमान् प्रज्वलनात्मको द्वेषः ॥ १५३ ॥**

येन गुणेन प्रज्वलितमिवात्मानं मन्यते स 'द्वेषः' । अक्षमाऽहंकारादयोऽप्यत्रैवान्तर्भूताः ॥ १५३ ॥

**प्रयत्नत्वसामान्यवान् प्रयत्नव्यवहाराऽसाधारणं कारणं प्रयत्नः ॥१५४**

'देवयात्रायै प्रयत्नमेव करोति' इत्यादि यद्व्यवहरणं तस्यासाधारणं कारणं यत्स 'प्रयत्नः' । स्थैर्यगाम्भीर्यौदार्यादयः प्रयत्नान्तर्भूताः, तेषामप्युत्साहातिशयरूपत्वादिति ॥

**गुरुत्व[1]जातिमदेकवृत्ति आद्य[2]पतनाऽसमवायिकारणं गुरुत्वम् ॥१५५॥**

पतनं कर्म; एकस्मिन्नेव वस्तुनि वृत्तिर्वर्तनं यस्य तदेकवृत्ति । पतनस्य पतनकर्मणोऽसमवायिकारणं यत् तद् 'गुरुत्वम्' । पतनकर्मणः त्रयं कारणं स्यात्—लोष्टादिपिण्डो यत्र समवेतं पतनमुत्पद्यते, तत्र लोष्टादौ यद् गुरुत्वं भारो वर्त्तते तदसमवायिकारणम्, लोष्टादिसमवेताद् गुरुत्वादेव तस्योत्पद्यमानत्वात्, निमित्तकारणं चाधाराभावादिकम् । कचित् पतनाऽसमवायिकारणं संयोगोऽपि स्यात् यथा कैन्दुकक्रीडायां हस्तेनाहन्यमानः कैन्दुकोऽधः पतति । तस्याद्यपतनस्य कैन्दुकहस्तसंयोगोऽसमवायिकारणम्, तन्निवृत्त्यर्थमुक्तम् एकवृत्तीति, संयोगस्य सम्बन्धरूपत्वेनोभयवृत्तित्वात् । अन्या व्यावृत्तिः स्वधिया विधेया ॥ १५५ ॥

**द्रवत्वजातिमदेकवृत्ति स्यन्दनाऽसमवायिकारणं द्रवत्वम् ॥ १५६ ॥**

स्रोतोभूतानां प्रभूतानां पयसां यन्निम्नाभिसर्पणं तस्यापि कारणत्रयं भवति—तत्र समवायिकारणं सलिलादीनि, असमवायिकारणं च द्रवीभावोऽद्रवस्वभावानां लोष्टादीनां स्यन्दनायोगात्, सेतुबन्धाभावादिकं निमित्तकारणम् । अतस्तत्र स्यन्दने संयोगव्यतिरिक्तमसमवायिकारणं यत्तद् द्रवत्वम् ॥ १५६ ॥

---

१ यस्य अ. १ । २ गुरुत्वत्वजा° क नि । ३ 'आद्य' इति नास्ति अ. १, अ २ । ४ कुन्दक अ १ अ. २ अशुद्धमेतत् । ५ द्रवत्वत्व क. नि. । ६ आद्यस्यन्दनाऽसमवायिकरणं अ. २, नि ।

**स्नेहत्वसामान्यवान् द्रवत्वशून्यः सङ्ग्रहाऽसाधारणं कारणं स्नेहः ॥**

सङ्ग्रहणं सङ्ग्रहः पिण्डीभवनमित्यर्थः । न ह्येकाकिनी मृत्तिका रेण्वादिकं नाना-प्रकारेण सङ्गृह्यमाणमपि सङ्ग्रहं पिण्डीभावं प्राप्नोति यावज्जलप्रक्षेपः कृतो न भवति । तस्मिंश्च प्रक्षिप्ते पिण्डीभावः स्यात् । तेन सलिलनिष्ठो गुणः स्नेहः सङ्ग्रहस्यासाधारणं कारणं भवति । ननु घृतेनाऽपि गोधूमचूर्णादेः पिण्डीभावो भवेत्, न च तत्र स्नेहोऽस्तीति, तस्य पार्थिवत्वाद्वैशेषिकैश्च स्नेहस्यपां विशेषगुणत्वेनैवाङ्गीकारात् । अतस्तत्राऽतिव्याप्तिः । तन्निरा-सार्थमाह 'द्रवत्वशून्य.' इति । घृतं हि यदा द्रवत्वशून्यं तदा न सङ्ग्रहं करोति । यदा तं करोति तदा द्रवत्ववदेव । स्नेहश्च द्रवत्वशून्य एव "गुणा निर्गुणाः" इति वचनादिति ॥ १५७ ॥

**संस्कारत्वसामान्यवान् स्वोत्पत्त्यवस्थापादको गुणः संस्कारः ॥१५८॥**

स्वस्य सस्कारस्योत्पत्त्यै याऽवस्था तस्यामापादयति स्वाश्रयं नयति प्रापयतीति 'स्वोत्पत्त्यवस्थापादकः' । वेग किल कर्म्मवति बाणादावुत्पद्यते । स चोत्पन्नः स्वाश्रयं कर्म्मवन्तमेव करोति, यतो बाणादावाद्यं कर्म्म नोदनाद् भवति । पश्चान्नोदनापेक्षात्कर्मणः सकाशाद्वेग उत्पद्यते । तेन वेगेन बाणादावुत्तरोत्तराणि कर्म्माणि तावदारभ्यन्ते यावदा-पतनात् स वेगो विनश्यति । तस्माद्वेगः स्वोत्पत्त्यवस्थापादकः । भावनापि अपूर्वदर्शनादे-रात्मनि समारोप्यते । यथा दाक्षिणात्यस्योष्ट्रदर्शनात् । सा च कालान्तरे तादृशवार्त्ता-प्रसङ्गादिनोद्बुद्धा सती उष्ट्रादिविषया स्मृतिमुत्पादयन्ती उष्ट्रादिविषयिज्ञानवन्तमेवात्मा-नमापादयतीति स्वोत्पत्त्यवस्थापादिका । स्थितिस्थापकोऽपि रूपादिसमकालं वस्तूत्पत्ते-रनन्तरं द्वितीयक्षणे दृढावस्थास्थिते कोदण्ड दण्ड शाखादावुत्पद्यते । वक्रावस्थावस्थिते श्वपुच्छिका-शृङ्गादौ च । ततश्च कोदण्डादयो ज्याकर्षणादिभिर्वक्रीकृता अपि प्रतिबन्धका भावे स्थितिस्थापकेन गुणेन पुनर्ऋजवः क्रियन्ते, श्वपुच्छिकादयश्च सरलीकृता अपि प्रति-बन्धकाऽभावे पुनस्तेन गुणेन वक्रावस्थायामेवापद्यन्त इति सोऽपि स्वोत्पत्त्यवस्थापादकः । कोदण्डादयोऽपि स्वोत्पत्त्यवस्थापादने हेतवो भवन्ति इति तत्राऽतिप्रसक्तिः । तन्निरासार्थं गुण इति ॥ १५८ ॥

**धर्मत्वसामान्यवान् सुखाऽसाधारणं कारणं धर्म्मः ॥ १५९ ॥**

धर्मत्वसामान्यवान् सुखाऽसाधारणं कारणं धर्म्मः ॥ १५९ ॥ सुखस्यानुकूलवेदस्य असाधारणमनन्यसमानतया यत्कारणं स 'धर्म्म.' । सुखं च

---

१ द्रवत्वर० क नि । २ प्रक्षिप्तेपि पि॰ अ १ । ३ घृतादिषु अ १ पा. टि । ४ बाणादौ आद्यं कर्म्म भवति । पश्चात् संयोगविशेषापेक्ष-
जातिमान् क नि । ५ संयोग-विशेषात्
कर्मतो वेग उत्पद्यते, अ १ पा टि । ६ करणम् अ. १ अ २ ।

धर्मसत्त्वे लिङ्गम् । कथम्? 'सुखं कुतश्चिदसाधारणकारणादुत्पन्नं कार्यत्वात् पटवत्' । अतो यत्किञ्चित्तत्राऽसाधारणं कारणं स धर्मः ।

ननु भो नास्ति धर्मः, प्रत्यक्षादिप्रमाणैरनुपलभ्यमानत्वाद् गगनेन्दीवरवद् इति चेत् । उच्यते, हेतोराश्रयासिद्धत्वान्न किञ्चिदेतद् । किञ्च 'नास्ति धर्मः' इत्यनेन धर्मशब्दो निषिध्यते तद्वाच्योऽर्थो वा? न तावच्छब्दः, त्वयैवोच्यमानत्वात् । नाप्यर्थोऽशक्तुं पार्यते—धर्म इति पदं कस्यचिद्वाच्यस्य वाचकम् असमस्तपदत्वात् । यानि पुनः समस्तानि पदानि तानि कदाचिद् निर्वाच्यान्यपि भवन्ति यथा 'गगनन्दीवरम्' । परमसमस्तानि कस्यचिद्वाचकान्येव । असमस्तं च 'धर्म' इति पदम्, तस्मात् कस्यचिद्वाचकमेव—इत्यनेन वाच्यार्थस्य प्रमाणसिद्धत्वात् ।

नन्वस्य वाच्यमस्ति, वस्तुस्वरूपस्य धर्मशब्दवाच्यत्वाङ्गीकारात्, परम् आत्मगुणस्त्वदुक्तो धर्मो निषिध्यते इति चेत् । न, मुरारस्य मनोरथस्य व्यपोढुमशक्यत्वात् । धर्माभावे तत्कुतः उपयतः? स्रक्चन्दनवनिताभ्यः इति चेत् । तान्यपि केनोपनीयन्ते? प्रयत्नेनेति चेत् । तन्न, तुल्यप्रयत्नयोरपि लाभालाभयोर्दृष्टत्वात् । तथा चोक्तम्—

> "धर्माधर्मविशेषात् तुल्ये यत्नेऽपि पुरुषयोरुभयोः ।
> एकस्य विभवलाभो हानिः प्रत्यक्षमपरस्य ॥"

सर्वेषां जन्तूनां सुखविषय एवाऽभिलापः स्यात् तथा चोक्तम्—

> "सर्वेऽपि सुखाकाङ्क्षा सर्वेऽपि दुःखभीरवो जीवाः ।
> सर्वेऽपि मरणभीता जीवितुमिच्छन्ति सर्वेऽपि ॥"

तस्मात्सर्वेऽपि सुखसाधकमेव प्रयत्नं कुतो न कुर्वन्ति, तस्यैवेष्टत्वात्? परं यो विहितसुकृतः सुगृहीतनामधेयो भवति स सुखसाधकं प्रयत्नं कुर्यात्, तद्विपरीतो दुःखसाधकम् । तस्मात् सुखसाधकप्रयत्नोत्पादकं किञ्चिददृष्टं कारणमभ्युपगन्तव्यम् । स च धर्म एवेति तत्सिद्धिः ॥ १५९ ॥

**अधर्मत्वसामान्यवान् दुःखाऽसाधारणं कारणं धर्मः ॥ १६० ॥**

यदन्यकार्यार्थमङ्गीक्रियते परं तदविवक्षितेऽपि कार्ये उपयोगमागच्छति, तत्तत्र कार्ये साधारणं कारणम् । यच्च विवक्षितकार्यमेवाङ्गीक्रियते तत्तस्मिन् कार्येऽसाधारणं कारणम् । अधर्मश्च दुःखनिमित्तमेवाङ्गीक्रियते । तथा हि—दुःखं कुतश्चिदसाधारणकारणादुत्पन्नं, कार्यत्वात् पटवत् । तत्र यदसाधारणं कारणं सोऽधर्म इति ॥ १६० ॥

---

१ प्राणिना अ २ । २ तस्मिन् विवक्षितेऽपि अ २ । ३ °ऽसाधारण अ २ ।

**शब्दत्वजातियोगी श्रोत्रग्राह्यो गुणः शब्दः ॥ १६१ ॥**

श्रोत्रेण श्रवणेन्द्रियेण समवायिसम्बन्धेन ग्राह्यो ग्रहणयोग्यो यो गुणः स 'शब्दः'। श्रोत्र-ग्राह्यः शब्द इत्युक्ते शब्दत्वेऽतिव्याप्तिः। तन्निवृत्यर्थं गुण इति ॥ लक्षिताः सर्वे गुणाः ॥१६१॥

कर्मणां लक्षणान्याह—

**उत्क्षेपणत्वजातिमदूर्ध्वदेशसंयोगकारणं कर्मोत्क्षेपणम् ॥ १६२ ॥**

यो यस्मिन्स्थाने स्थितो भवति तस्मादूर्ध्वं देशेन सह येन कर्मणा वस्तुनः संयोगो भवति तदुत्क्षेपणम्। संयोगो गुणः स च मूर्ते वस्तुनि दिशि चोभयत्र समवेत उत्पद्यते; अत ऊर्ध्वदेशसंयोगकारणं समवायिकारणत्वेन द्रव्यमपि स्यात्। प्रयत्नादिको गुणोऽपि निमित्तकारणं स्यात्। तन्निवृत्यै उवाच कर्मेति। एवमग्रेऽपि कर्मशब्दव्यावृत्तिः ॥१६२॥

**अपक्षेपणत्वजातिमदधोदेशसंयोगकारणं कर्मापक्षेपणम् ॥ १६३ ॥**

सुगमम् ॥ १६३ ॥

**आकुञ्चनत्वजातिमद्वक्रत्वापादकं कर्माऽऽकुञ्चनम् ॥ १६४ ॥**

**प्रसारणत्वजातिमदृजुत्वापादकं कर्म प्रसारणम् ॥ १६५ ॥**

एतेऽपि सुगमे नवरमत्र कर्मग्रहणं स्थितिस्थापकसंस्कारनिवृत्यर्थम्॥१६४-१६५॥

**गमनत्वजातिमदनियतदेशसंयोगकारणं कर्म गमनम् ॥ १६६ ॥**

अनियताऽनिश्चिता ऊर्ध्वाऽधस्तिर्यगादिवचनैरनियमिता देशादिकप्रदेशास्तैः सह येन कर्मणा मूर्तस्य द्रव्यस्य संयोगो भवति तद् 'गमनम्'। एतावता पूर्वोक्तेभ्यश्चतुर्भ्यः कर्मभ्यो यानि गमन-भ्रमण-स्यन्दन-रेचन-तिर्यक्पतन-नमनोन्नमन-प्रवेशन-निष्क्रमणादीनि भिन्नानि तानि सर्वाण्यपि गमनान्येवेति ॥ १६६ ॥

सामान्यभेदानां लक्षणमाह—

**व्यापकमात्रं सामान्यं परम् ॥ १६७ ॥**

एकं व्यापकं, एकं च व्याप्यम्। तयोर्मध्ये यदधिकवृत्ति तद् व्यापकम्, यच्चाल्प-वृत्ति व्यापकेन सहाविनाभूतं तद् व्याप्यम्, यथा धूमानुमाने वह्निर्व्यापकं, धूमो व्याप्यम्; यतो यत्र यत्र वह्निस्तत्र तत्र धूम इति नास्ति। अङ्गारावस्थायां वह्निसद्भावे वह्निः सर्वत्राप्यस्त्येव तेन। वह्निरधिकवृत्तित्वाद् व्यापकं धूमश्चाल्पवृत्तित्वाद् व्याप्यम्। उक्तं च।

"व्यापकं तदतन्निष्ठं व्याप्यं तन्निष्ठमेव च।
व्याप्यं गमकमादिष्टं व्यापकं गम्यमिष्यते ॥"

१ सामान्ययोगी क.।

तत्रश्चात्र यत्सामान्यमपरेषु स्वयं व्यापकमेव भवति न पुनः कस्यापि सामान्यान्तरस्य व्याप्यं स्यात् तत् सत्तालक्षणं परं सामान्यम् । सत्ता हि द्रव्यत्व-गुणत्व-कर्मत्वादिभ्योऽपरसामान्येभ्योऽधिकवृत्तित्वाद् व्यापकरूपैव भवति । परं सामान्यान्तरमपरं तादृशं किमपि नास्ति यत्सत्तातोऽप्यधिकवृत्ति स्यादिति सा व्यापकमात्रं सामान्यम् । सामान्यं परमित्युक्तेऽपरे सामान्येऽतिव्याप्तिस्तन्निवृत्त्यै व्यापकमिति । तथापि परापरसामान्ये व्यभिचारस्तन्निवृत्त्यै मात्रेति पदम्, मात्रशब्दस्य व्याप्यत्वनिरासार्थत्वात्। व्यापकमात्रं परमित्युक्ते अस्तित्वाभिधेयत्वज्ञेयत्वेषु व्यभिचारः, तान्यपि सर्वेभ्योऽपरधर्मेभ्योऽधिकवृत्तित्वाद् व्यापकमात्राण्येव भवन्ति । तद्व्यवच्छेदार्थमभाणि सामान्यमिति । तानि तु सामान्यं न भवन्ति, सामान्यस्य पदार्थत्रयमात्रवृत्तिनियमादेतेषां च सप्तस्वपि विशेषेण वर्तनादिति ॥१६७॥

## व्याप्यमात्रं सामान्यमपरम् ॥ १६८ ॥

यत्सामान्यमन्यसामान्येभ्योऽत्यन्तमल्पवृत्तित्वात् स्वयं व्याप्यमेव, न क्वचिद् व्यापकम् । अत्र 'मात्र'शब्दस्य व्यापकत्वनिरासार्थत्वात् । व्याप्यमात्रमपरमित्युक्ते विशेषेष्वतिप्रसक्तिस्तेषामप्येकैकद्रव्यमात्रवृत्तित्वात् सर्वधर्मेभ्योऽल्पवृत्तित्वेन व्याप्यत्वमेव, न क्वचिद् व्यापकत्वम् । अतस्तन्निवृत्त्यर्थं सामान्यमिति । तत्तु घटत्व-घवत्व खदिरत्व-पलाशत्व-शुक्लत्व-मधुरत्व-सुरभित्वोष्णत्वादिकम् । तस्मादल्पवृत्ति तदाश्रये सामान्यमन्यन्नास्ति इति ॥ १६८ ॥

## व्याप्यव्यापकरूपं गुणत्व-द्रव्यत्वादि सामान्यं परापरम् ॥ १६९ ॥

यत्सामान्यं सामान्यान्तरापेक्षया व्याप्यं व्यापकं च भवति, तत्किम्? गुणत्व-द्रव्यत्वादि । गुणत्वं हि सत्तासामान्यापेक्षया व्याप्यं भवति ततोऽल्पवृत्तित्वात् तेन सह व्रा अविनाभूतत्वात् । तथाहि यत्र यत्र गुणत्वं तत्र तत्र सत्ता इत्यविनाभावोऽस्त्येव, यत्र यत्र सत्ता तत्र तत्र गुणत्वमिति नास्ति, द्रव्यादौ व्यभिचारादिति । तथा रूपत्वसामान्यापेक्षया गुणत्वं व्यापकं ततोऽधिकवृत्तित्वाद् वह्निमत्त्ववत् । तथाहि यत्र रूपत्वं तत्र गुणत्वमित्यविनाभावः । परं यत्र यत्र गुणत्वं तत्र तत्र रूपत्वमिति नास्ति, रसादौ व्यभिचारात् । तदेवं व्याप्यं व्यापकं चापेक्षया गुणत्वमिति भवति । एवं द्रव्यत्वं सत्तापेक्षया व्याप्यम्, पृथिवीत्वापेक्षया व्यापकम् । आदिशब्दात् पृथिवीत्व-जलत्व-भाण्डत्व-वृक्षत्व-रूपत्व-रसत्व कर्मत्वादयो ज्ञातव्या इति ।

१ अस्तित्व स्वरूपसत्त्वम् अ.१ पा टि । २ अपर सामान्यं अ १ पा. टि । ३ 'इति' नास्ति अ. २ । ४ व्याप्यव्यापकोभयरूप सामान्य परापरम् क नि । ५ 'त्व भ' अ. २ । ६ रूपत्वासत्व अ. १ ।

व्याप्यव्यापकरूपं परापरमित्युक्ते समवायित्वादौ व्यभिचारः तस्याप्यस्तित्वापेक्षया व्याप्यरूपत्वात् ततोऽल्पवृत्तित्वात्तेनाविनाभूतत्वाच्च, सत्तासामान्यापेक्षया व्यापकरूपत्वात् ततोऽधिकवृत्तित्वात्। तस्मात्तद्व्यावृत्तये सामान्यमिति। सामान्यं त्रिष्वेव वर्त्तते समवायित्वं च पञ्चाद्यपदार्थवृत्ति इति। अत्र गुणत्व-द्रव्यत्वादीति उदाहरणोद्देशः स्पष्टार्थः ॥ १६९ ॥

अभावभेदांल्लक्षयति—

**अनादिः सान्तः प्रागभावः ॥ १७० ॥**

न विद्यते आदिर्जन्म यस्य स 'अनादिः' उत्पत्तिरहित इत्यर्थः। सह अन्तेन विनाशेन वर्त्तते इति 'सान्तः' अनित्य इत्यर्थः। य उपद्यते न, परं विनश्यति स 'प्रागभावः' यथा घटोत्पत्तेः प्राग् मृदि घटप्रागभावोऽनन्तकालादस्ति तत्कालविशिष्टस्योत्पित्सुघटस्य तत्रानन्तकालादवर्त्तनात्। घटोत्पत्तिकाले च तदुत्पादकसामग्रीतः स विनश्यति। 'अनादि'-पदं घटादिनिवृत्त्यर्थम्। 'सान्त'पदं गगनादिनिरासार्थम् ॥ १७० ॥

**सादिरनन्तः प्रध्वंसाभावः ॥ १७१ ॥**

य उत्पद्यते परं कदाचिन्न विनश्यति स 'प्रध्वंसाभावः'। यथा प्रोत्पादितप्रचण्डदण्डाभिघाताद् घटादिः प्रध्वंस्यते, तद्विनाशरूप एव दण्डादिभ्यः प्रध्वंसाभाव उत्पद्यते परं कदाचिन्न क्षीयत इति। अत्र 'सादि'पदं व्योमादेर्व्यावृत्त्यर्थम्। 'अनन्त'पदं घटादेश्चेति ॥

**अनादिरनन्तः संसर्गाभावोऽत्यन्ताभावः ॥ १७२ ॥**

यस्यादिः उत्पत्तिरपि न, अन्तो विनाशोऽपि न, तादृशो यः संसर्गस्य सम्बन्धस्याभावः सोऽत्यन्ताभावः। आत्मनि रूपस्य वा शशशृङ्गस्य वा। अनादिरत्यन्ताभाव इत्युक्ते प्रागभावेऽपि प्रसक्तिस्तद्व्यवच्छित्त्यै अनन्तः; तथोक्ते गगनादौ व्यभिचारस्तन्निषेधाय अभावेति। तथोक्ते असम्भवो लक्षणस्य। कथम्? अभावः किल प्रतियोगिनो भवति। अभावस्य चानाद्यनन्तत्वात् सर्वकालं नास्त्येव, सर्वथाभावे नामापि न स्यात् प्रतियोगिनः। तथा चानुच्चारप्रसङ्गः। अतोऽभावस्याप्यनुच्चार्यत्वं, तस्य प्रतियोग्यधीनत्वादिति। तन्निरासार्थं संसर्गाभाव इति। यथा प्रागभावादयो वस्तुनिषेधकास्तथाऽयं न, किन्तु वस्तुनोर्द्वयोः सत्त्वेऽपि सम्बन्धो निषिध्यते। यथा शशशृङ्गात्यन्ताभावे शशशृङ्गयोर्वियुक्तयोर्विद्यमानत्वेऽपि सम्बन्धाभावस्योच्यमानत्वादिति ॥ १७२ ॥

**तादात्म्यनिषेधोऽन्योन्याभावः ॥ १७३ ॥**

---

१ स्वरूपसत्ताऽपेक्षया अ. १ पा. टि.। २ द्रव्यत्वादीनि अ. १।

स एवात्मा स्वरूपं यस्य स तदात्मा; तदात्मनो भावस्तादात्म्यम् ऐक्यमित्यर्थः। तस्य यो निषेधः सोऽन्योन्याभावः। यथा गुणो गुणी न। पटो घटो न। घटः पटो नेत्यादि ॥ १७३ ॥

एवं सर्वभेदान् लक्षयित्वा प्रभेदान् विवक्षुरादौ पृथिवी नित्या चानित्या चोक्ताऽऽसीत्; तत्किं नित्यत्वं किञ्चानित्यत्वमित्याशङ्क्याह—

**नित्यत्वं प्रध्वंसविरहः ॥ १७४ ॥**

यस्य वस्तुनः प्रध्वंसो विनाशो न, तन्नित्यम् ॥ १७४ ॥

**अनित्यत्वं प्रध्वंसवत्त्वम् ॥ १७५ ॥**

स्पष्टम् ॥ १७५ ॥

सैव परमाणुलक्षणा कार्यलक्षणेत्युक्ताऽऽसीत्। स कः परमाणुरित्याशङ्क्य तं लक्षयति—

**निरवयवः क्रियावान् परमाणुः ॥ १७६ ॥**

न विद्यतेऽवयवो यस्य स 'निरवयवः'। क्रियावान् चलनगमनागमनादिकारी। 'निरवयव'पदं कार्यद्रव्यनिरासार्थम्। 'क्रियावान्'पदं विष्णुपदादिव्यवच्छेदार्थम् ॥१७६॥

ननु निरवयवस्तदा ज्ञायते यदि पूर्वं तावदवयवो ज्ञातः स्यात्। अतः स एव लक्ष्य इत्याशङ्क्य तं लक्षयति—

**द्रव्यसमवायिकारणमवयवः ॥ १७७ ॥**

यत्र समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्। द्रव्यस्योक्तलक्षणस्य समवायिकारणं यत् सोऽवयवः; यथा पटस्य द्रव्यस्य समवायि कारणं भवन्ति तन्तवः, पटस्य तन्तुसमवेतत्वेनोत्पादात्। अतस्तेऽवयवाः पटस्य। द्व्यणुकस्य परमाणू अवयवौ द्वाभ्यामणुभ्यां द्व्यणुकोत्पत्तेः। त्र्यणुकस्य द्व्यणुकान्यवयवाः। चतुरणुकस्य त्र्यणुकान्यवयवाः, चतुर्भिस्त्र्यणुकैस्तस्योत्पादाद्। एवं सर्वत्र ॥ १७७ ॥

प्रसङ्गायातत्वादन्त्यावयविलक्षणमाह—

**द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि ॥ १७८ ॥**

अन्त्यावयवि शरीरं घटादि वा, तत् द्रव्यान्तरस्य स्वसमवेतत्वेन अनारम्भकमनुत्पादकम्। यथा बहुभिस्तन्तुभिर्मिलित्वा एकः पटीयान् पट उत्पाद्यते एवं न शरीरैर्बहुभिरेकं गरीयः शरीरमारभ्यते। तस्मात् द्रव्यानारम्भकं कार्यद्रव्यं भवति सावयवत्वात्। अतः शरीराद्यमन्त्यावयवि द्रव्यम्। अन्त्यावयवीत्युक्ते गगनादावतिव्याप्तिः, कार्यद्रव्य-

मित्युक्ते द्व्यणुकादौ व्यभिचारस्तन्निवृत्त्यै अनारम्भकपदम् । तथोक्ते असम्भवि लक्षण स्यात्
कार्यद्रव्यस्यानारम्भकस्य कस्याप्यभावात्, शरीरादीनामपि स्वसमवेतगुणकर्मारम्भकत्वात् ।
तन्निवृत्त्यर्थं द्रव्येति पदम् । ते गुणकर्मणामारम्भका स्यु, पर न द्रव्यस्य । द्रव्यानार-
म्भकमन्त्यावयवीत्युक्ते सामान्यादौ व्यभिचारस्तदुच्छित्त्यै द्रव्यमिति । तथोक्ते मनआदौ ।
तन्निरासाय कार्यमिति ॥ १७८ ॥

**प्रागभावचत् कार्यम् ॥ १७९ ॥**

प्रागभावो विद्यते यस्य तत्प्रागभाववत् । यद्वस्तु पूर्वमविद्यमान पश्चाच्च कारणेभ्य
उत्पद्यते तत्कार्यमिति भाव ॥ १७९ ॥

सा शरीरेन्द्रियविषयरूपेत्युक्तमासीत् । अतस्तानि त्रीणि लक्षयति—

**भोगायतनमन्त्यावयवि शरीरम् ॥ १८० ॥**

भोगस्य वक्ष्यमाणलक्षणस्यायतन गृह स्थान अन्त्य पार्यन्तिकमवयवि अन्त्यावयवि
यत्तत् शरीरम् । अन्त्यावयवि शरीरमित्युक्ते घटादौ व्यभिचार, घटादीनामप्यन्त्यावय
वित्वात् । तन्निवृत्त्यर्थं भोगायतनमिति । भोगायतन शरीरमित्युक्ते करचरणशिरोग्रीवादयोपि
भोगस्थान स्युरिति तत्रातिप्रसक्ति । तन्निवृत्त्यै अन्त्यावयवीति ॥ १८० ॥

भोगायतनमित्युक्त, तर्हि भोगस्तावन्न ज्ञायतेऽस्माभिरित्याशङ्क्य त लक्षयति—

**स्वसमवेतसुखदुःखयोरन्यतरसाक्षात्कारो भोगः ॥ १८१ ॥**

सुखदु खयोरन्यतरत् एक किमपि सुख दु ख वा, तस्य मनसा साक्षात्कार 'यदह
सुख्यस्मि दु ख मे महदेतत्' इत्यादिप्रकारेण यदुन्नीयते स भोग । साक्षात्कारो भोग इत्युक्ते
घटसाक्षात्कारोऽपि भोग स्यात्, तन्निरासाय दु खसाक्षात्कार । तथोक्ते सुखसाक्षात्कारे
ऽव्यापक लक्षणमेतत्स्यात्, तन्निवृत्त्यर्थं सुखेति । सुखदु खसाक्षात्कार इत्युक्ते सकलजन्तुसम-
वेतसुखदु खसाक्षात्काररूपे योगिप्रत्यक्षे ईश्वरज्ञाने चातिव्याप्ति, तेषा सर्वज्ञत्वात् । तन्नि
वृत्त्यर्थमभाणि स्वसमवेतेति । ईश्वरज्ञान हि परात्मनिष्ठान्येव सुखदु खानि साक्षात्पश्यति न
स्वसमवेतानि, तस्मिन् सुखदु खयोरभावात् । योगिप्रत्यक्ष च स्वात्मनिष्ठानि पश्यद् भोगोऽ
न्तर्गतम् । परात्मसमवेतान्यवगच्छन्न भोग इति । स्वसमवेतसुखदु खसाक्षात्कार इत्युक्तेऽस-
म्भवि लक्षण स्यात्, सुखदु खयो परस्परविरुद्धयोरेकस्मिन्नात्मनि युगपत्साक्षात्काराऽ
सम्भवात्, तदुच्छेदायान्यतर इति ॥ १८१ ॥

१ भोगश्च अ १ अ २ द्वयोरपि पुस्तकयो किन्तु च अत्र अनर्थक । 'क नि',
पुस्तकयोश्च नास्ति अतोऽत्र न स्थापित । २ तन्निरासार्थे अ २ ।

स एवात्मा स्वरूपं यस्य स तदात्मा; तदात्मनो भावस्तादात्म्यम् ऐक्यमित्यर्थः। तस्य यो निषेधः सोऽन्योन्याभावः। यथा गुणो गुणी न। पटो घटो न। घटः पटो नेत्यादि॥ १७३॥

एवं सर्वभेदान् लक्षयित्वा प्रभेदान् विवक्षुरादौ पृथिवी नित्या चानित्या चोक्ताऽऽसीत्; तत्किं नित्यत्वं किञ्चानित्यत्वमित्याशङ्क्याह—

**नित्यत्वं प्रध्वंसविरहः॥ १७४॥**

यस्य वस्तुनः प्रध्वंसो विनाशो न, तन्नित्यम्॥ १७४॥

**अनित्यत्वं प्रध्वंसवत्त्वम्॥ १७५॥**

स्पष्टम्॥ १७५॥

सैव परमाणुलक्षणा कार्यलक्षणेत्युक्ताऽऽसीत्। स कः परमाणुरित्याशङ्क्य तं लक्षयति—

**निरवयवः क्रियावान् परमाणुः॥ १७६॥**

न विद्यतेऽवयवो यस्य स 'निरवयवः'। क्रियावान् चलनगमनागमनादिकारी। 'निरवयव'पदं कार्यद्रव्यनिरासार्थम्। 'क्रियावान्'पदं विष्णुपदादिव्यवच्छेदार्थम्॥१७६॥

ननु निरवयवस्तदा ज्ञायते यदि पूर्वं तावदवयवो ज्ञातः स्याद्। अतः स एव लक्ष्य इत्याशङ्क्य तं लक्षयति—

**द्रव्यसमवायिकारणमवयवः॥ १७७॥**

यत्र समवेतं कार्यमुत्पद्यते तत्समवायिकारणम्। द्रव्यस्योक्तलक्षणस्य समवायिकारणं यत् सोऽवयवः; यथा पटस्य द्रव्यस्य समवायि कारणं भवन्ति तन्तवः, पटस्य तन्तुसमवेतत्वेनोत्पादात्। अतस्तेऽवयवाः पटस्य। द्व्यणुकस्य परमाणू अवयवौ द्वाभ्यामणुभ्यां द्व्यणुकोत्पत्तेः। त्र्यणुकस्य द्व्यणुकान्यवयवाः। चतुरणुकस्य त्र्यणुकान्यवयवाः, चतुर्भिस्त्र्यणुकैस्तस्योत्पादाद्। एवं सर्वत्र॥ १७७॥

प्रसङ्गायातत्वादन्त्यावयविलक्षणमाह—

**द्रव्यानारम्भकं कार्यद्रव्यमन्त्यावयवि॥ १७८॥**

अन्त्यावयवि शरीरं घटादि वा, तत् द्रव्यान्तरस्य स्वसमवेतत्वेन अनारम्भकमनुत्पादकम्। यथा बहुभिस्तन्तुभिर्मिलित्वा एकः पटीयान् पट उत्पाद्यते एवं न शरीरैर्बहुभिरेकं गरीयः शरीरमारभ्यते। तस्मात् द्रव्यानारम्भकं कार्यद्रव्यं भवति सावयवत्वात्। अतः शरीराद्यमन्त्यावयवि द्रव्यम्। अन्त्यावयवीत्युक्ते गगनादावतिव्याप्तिः, कार्यद्रव्य-

मित्युक्ते द्व्यणुकादौ व्यभिचारस्तन्निवृत्त्यै अनारम्भकपदम् । तथोक्ते असम्भवि लक्षणं स्यात्
कार्यद्रव्यस्यानारम्भकस्य कस्याप्यभावात्, शरीरादीनामपि स्वसमवेतगुणकर्मारम्भकत्वात् ।
तन्निवृत्त्यर्थं द्रव्येति पदम् । ते गुणकर्म्मणामारम्भकाः स्युः, परं न द्रव्यस्य । द्रव्यानार-
म्भकमन्त्यावयवीत्युक्ते सामान्यादौ व्यभिचारस्तदुच्छित्त्यै द्रव्यमिति । तथोक्ते मनआदौ ।
तन्निरासाय कार्यमिति ॥ १७८ ॥

**प्रागभाववत् कार्यम् ॥ १७९ ॥**

प्रागभावो विद्यते यस्य तत्प्रागभाववत् । यद्वस्तु पूर्वमविद्यमानं पश्चाच्च कारणेभ्य
उत्पद्यते तत्कार्यमिति भावः ॥ १७९ ॥

सा शरीरेन्द्रियविषयरूपेत्युक्तमासीत् । अतस्तानि त्रीणि लक्षयति—

**भोगायतनमन्त्यावयवि शरीरम् ॥ १८० ॥**

भोगस्य वक्ष्यमाणलक्षणस्यायतनं गृहं स्थानं अन्त्यं पार्यन्तिकमवयवि अन्त्यावयवि
यत्तत् शरीरम् । अन्त्यावयवि शरीरमित्युक्ते घटादौ व्यभिचारः, घटादीनामप्यन्त्यावय-
वित्वात् । तन्निवृत्त्यर्थं भोगायतनमिति । भोगायतनं शरीरमित्युक्ते करचरणशिरोग्रीवादयोपि
भोगस्थानं स्युरिति तत्रातिप्रसक्तिः । तन्निवृत्त्यै अन्त्यावयवीति ॥ १८० ॥

भोगायतनमित्युक्तं, तर्हि भोगस्तावन्न ज्ञायतेऽस्माभिरित्याशङ्क्य तं लक्षयति—

**स्वसमवेतसुखदुःखयोरन्यतरसाक्षात्कारो भोगः ॥ १८१ ॥**

स्वसमवेतसुखदुःखयोरन्यतरत् एकं किमपि सुखं दुःखं वा, तस्य मनसा साक्षात्कारः 'यदहं
सुख्यस्मि दुःखं मे महदेतत्' इत्यादिप्रकारेण यदुल्लीयते स भोगः । साक्षात्कारो भोग इत्युक्ते
घटसाक्षात्कारोऽपि भोगः स्यात्, तन्निरासाय दुःखसाक्षात्कारः । तथोक्ते सुखसाक्षात्कारे
ऽव्यापकं लक्षणमेतत्स्यात्, तन्निवृत्त्यर्थं सुखेति । सुखदुःखसाक्षात्कार इत्युक्ते सकलजन्तुसम-
वेतसुखदुःखसाक्षात्काररूपे योगिप्रत्यक्षे ईश्वरज्ञाने चातिव्याप्तिः, तेषां सर्वज्ञत्वात् । तन्नि-
वृत्त्यर्थमभाणि स्वसमवेतेति । ईश्वरज्ञानं हि परात्मनिष्ठान्येव सुखदुःखानि साक्षात्पश्यति न
स्वसमवेतानि, तस्मिन् सुखदुःखयोरभावात् । योगिप्रत्यक्षं च स्वात्मनिष्ठानि पश्यद् भोगोऽ
न्तर्गतम् । परात्मसमवेतान्यवगच्छन्न भोग इति । स्वसमवेतसुखदुःखसाक्षात्कार इत्युक्तेऽस-
म्भवि लक्षणं स्यात्, सुखदुःखयोः परस्परविरुद्धयोरेकस्मिन्नात्मनि युगपत्साक्षात्काराऽ-
सम्भवात्, तदुच्छेदायान्यतर इति ॥ १८१ ॥

---

१ भोगश्च अ. १ अ. २ द्वयोरपि पुस्तकयोः किन्तु 'च' अत्र अनर्थकः । 'क. नि',
पुस्तकयोश्च नास्ति अतोऽत्र न स्थापितः । २ तन्निरस्यायै अ. २ ।

अथ द्वितीयं पदं लक्षयति—

**यदवच्छिन्नात्मनि भोगस्तदायतनम् ॥[1] १८२ ॥**

येनावच्छिन्नो व्याप्तः क्रोडीकृत आत्मा तस्मिन् भोगः सुखदुःखान्यतरसाक्षात्कार-लक्षणोऽस्ति तदायतनम्, यत आत्मा जगद्व्यापकोऽपि शरीरावच्छिन्नप्रदेशे एव सुख-दुःखानि भुङ्क्ते न सर्वत्र ॥ १८२ ॥

शरीरं लक्षितम्, इन्द्रियं लक्षयति—

**साक्षात्कारज्ञानकारणमिन्द्रियम् ॥ १८३ ॥**

कारणमिन्द्रियमित्युक्ते कुठारादावतिप्रसक्तिस्तद्व्यवच्छेदार्थं ज्ञानपदम्। तथोक्ते-ऽनुमानेऽतिव्याप्तिः, तन्निवृत्त्यर्थं साक्षात्कारपदम्। एतावता प्रत्यक्षप्रतीत्यसाधारणं कारणं यत्तदिन्द्रियमिति भावः ॥ १८३ ॥

विषयं लक्षयति—

**आत्मनो भोगकारणं विषयः ॥ १८४ ॥**

सुगमम्। नवरं शरीरेन्द्रियाभ्यां व्यतिरिक्तमात्मनो यद्भोगमुत्पादयति स विषयः॥

तैजसश्चत्वारः प्रकारा उदिता आचार्यैस्तांल्लक्षयति—

**पार्थिवमात्रेन्धनं तेजो भौमम् ॥ १८५ ॥**

पार्थिवमेव काष्ठतैलघृतादिकमिन्धनं दाह्यं यस्य तत्पार्थिवमात्रेन्धनम्। तेजोग्रहणं हिमादिनिवृत्त्यर्थम्, यतो हिमसहतिरपि पार्थिवान्येव द्रुमपल्लवादीनि प्लोषति। मात्रग्रहण-मौदर्यतेजसो निरासार्थम् ॥१८५॥

**जलमात्रेन्धनं तेजो दिव्यम् ॥ १८६ ॥**

जलं पानीयमेवेन्धनं दाह्यमुद्दीपकं वा तज्जलमात्रेन्धनम्। तच्च विद्युत्सूरवडवानला-दिकं यज्जलेन प्रज्वलति। अत्र तेजोग्रहणं वृक्षादिनिवृत्त्यर्थं यतस्तदपि जलेनैवोद्दीप्यत इति ॥ १८६ ॥

**पार्थिवजलेन्धनं तेज औदर्यम् ॥ १८७ ॥**

पार्थिवमाहारादि, जलं सलिलं ते द्वे इन्धनं यस्य तत्पार्थिवजलेन्धनम्। जाठरोग्नि-[5] र्हिलाहारनीराभ्यां विना चिरकालेनात्यन्तं प्रज्वल्य निरिन्धनो विध्यातो भवति। आहारादौ च मन्दं मन्दं प्रक्षिप्ते मन्दं मन्दमुदरस्थः स प्रज्वलति। अत्यन्तप्रचुरतरेणाहारादिकेन

१ यदवच्छिन्ने, क. नि। २ साक्षात्कारि क. नि। ३ उदितामुदिशयैस्तांल्लक्षयति अ. २। ४ पार्थिवानेव अ. १। ५ जाठराग्निः अ १।

युगपत् प्रक्षिप्तेन विध्याप्यते यथा कृशः कृशानुः परममहदेधसां संततप्रक्षेपेण। अत्र तेजो-
ऽभिधानं शरीरादिनिवृत्त्यर्थं तस्याप्याहारनीराभ्यां पोषात् ॥ १८७ ॥

**निरिन्धनं तेज आकरजम् ॥ १८८ ॥**

निर्नं विधने इन्धनं दाह्यं यस्य तन्निरिन्धनम्। तेजोग्रहणं ज्वालादिव्यवच्छेदार्थं
निरिन्धनग्रहणं च भौमादितेजसो निरासार्थम् ॥ १८८ ॥

निरिन्धनस्य तेजसो लोकाऽप्रसिद्धत्वान्निदर्शनमाह—

**तच्च सुवर्णादि ॥ १८९ ॥**

आकरजं तेजश्चामीकरादिकमवसेयम्। आदिशब्दाद् यदग्निसंयोगेन द्रवीभवति न
चात्यन्तं प्रबलानलेन दह्यमानमपि मनागपि दह्यते तद्रजतप्रभृतिकं धातुविशेषरूपं वस्तु
विज्ञेयमिति। तैजसत्वमस्य प्रागुक्तयुक्तिभिः साधनीयमिति।

ननु उष्णस्पर्शं तेज उक्तम्, तत्तेजस. सामान्यलक्षणं सुवर्णेऽव्यापकं तस्यानुष्ण-
त्वादिति चेत्। न, तत्राप्युष्णस्पर्शाङ्गीकारात्। तस्योष्णत्वे अङ्गुलीयकमङ्गुलीं ज्वालयेदिति
चेत्। न, प्रदीपालोकादौ व्यभिचारात्। यथा बाह्यालोको लोकानां विशिष्टादृष्टवशादनुद्भूत-
स्पर्शत्वेन नोष्णोऽनुभूयते तथा हाटकमप्यस्पष्टस्पर्शं प्राणिनामदृष्टवशादेव तथा प्रतीयते।
तस्यौष्ण्यं यदि स्फुटं स्यात्तदा विहितसुकृतातिशयोऽपि को व्यपगतदूषणानि भूषणानि
परिदध्यात्। ननु उष्णस्पर्शस्तत्र कुत. प्रतीयते। तैजसत्वादिति ब्रूमः। ननु तर्हि सर्वोऽपि
वस्तुस्तोमस्तैजस उष्णस्पर्शः कल्प्यतां, परं प्राणिनामदृष्टवशान्न तथाऽनुभूयते इत्युच्यता-
मिति चेत्। न, एकत्र प्रमाणप्रसिद्धत्वेन कल्पनायां सर्वत्र त.परिकल्पनेऽतिप्रसङ्गस्या-
प्रामाणिकत्वादिति ॥ १८९ ॥

अथोत्पत्तिस्थितिविनाशलक्षणः कालस्त्रिविध उक्त आसीत्, तत्राद्यामुत्पत्तिं
लक्षयति—

**सकलकारणयौगपद्यमुत्पत्तिः ॥ १९० ॥**

सकलानि समस्तानि समवाय्यसमवायिनिमित्तलक्षणानि कारणानि, तेषां यौगपद्य-
मेकस्मिन्समये सर्वेषां मेलापकः तदुत्पत्तिरुच्यते। यथा पटस्य समवायिकारणं तन्तवः,
असमवायिकारणं तन्तूनां परस्परं संयोगः, निमित्तकारणं च तन्तुवायवेमादि, ईश्वरेच्छा,
भोगिनां धर्माधर्मौ इत्यादिकम्। एवमेतानि सर्वाण्यपि कारणानि सामस्त्येन यत्र मिलि-
तानि स्युस्तदा पटोत्पत्तिः, एवं घटादेरपि ॥ १९० ॥

१ वागतदूषणानि अ. २। २ निमित्तकारण तुरीवायुवेमादि अ. २।

यौगपद्यमित्युक्तं तत्किमुच्यते इत्याशङ्क्य तल्लक्षयति—

**अनेकेषामेकक्षणसम्बन्धो यौगपद्यम् ॥ १९१ ॥**

अनेकेषां बहूनां तन्तूनामेकस्मिन्क्षणे कालविशेषे यः सम्बन्धः परस्परं सान्निध्यं तद्यौगपद्यम्। अथवा एकेन क्षणेन सह यः सम्बन्धः संयोगः तद्यौगपद्यम्। सम्बन्धो यौगपद्यमित्युक्ते समवायोऽपि तत्स्यात्तन्निवृत्त्यर्थं क्षणेति। क्षणेन सह सम्बन्धः क्षणसम्बन्धः, स चातीतानागतवार्त्तमानिकानां द्रव्याणां सर्वेषामप्यस्ति क्षणस्य कालविशेषत्वात् कालस्यामूर्तद्रव्यत्वादमूर्तद्रव्यस्य च समस्तैः मूर्तैः सह संयोगित्वात्; तद्विच्छित्यै एकेति। सम्बन्धः पृथग्भूतैर्बहुभिः क्षणैरस्ति नैकेन। तथोक्तेऽपि एकस्य वस्तुन एकेन क्षणेन सह सम्बन्धो यौगपद्यं स्यात् तन्निवृत्त्यर्थम् अनेकेषामिति ॥ १९१ ॥

क्षणसम्बन्ध इत्युक्तं तेन स क्षणः किंलक्षण इत्याशङ्क्य तं लक्षयति—

**विभागानुत्पाद्यविभागप्रागभावसंबन्धकर्मावच्छिन्नः कालः क्षणः ॥ १९२ ॥**

विभागेनाऽनुत्पाद्यो विभागो विभागाऽनुत्पाद्यविभागः कर्म्मजविभाग इत्यर्थः। तस्य प्रागभावस्तेन सह सम्बन्धो विशेषणविशेष्यभावलक्षणः, कर्म्म च। ताभ्यामवच्छिन्नो विभागीकृतो यावान् कालविशेषः स क्षण इत्यवयवार्थः।

भावार्थस्त्वयम्—उद्दण्डदण्डायुधाभिघातात् घटशकलेषु कर्म्मोत्पद्यते, कर्म्मणा विभागो भवति, विभागाच्च विभागज विभागो भवति। अतः कर्म्म जातं भवति, कर्म्मजो विभागोऽनुत्पन्नो भवति। तावान् कालविशेषः क्षण इत्युच्यते। कालः क्षण इत्युक्ते युगादावतिव्याप्तिः। तन्निरासार्थं कर्म्मावच्छिन्न इति। तथोक्ते कर्म्मापि द्वित्रिक्षणेऽवस्थायि भवतीति तत्रातिप्रसक्तिः। तन्निरासार्थं विभागप्रागभावसम्बन्धेति। तथोक्ते क्षणद्वयेऽतिप्रसक्तिः विभागजविभागप्रागभावेन कर्म्मणा च सह सम्बन्धो भवति क्षणद्वयम्, पूर्वं कर्म्म, ततः कर्म्मजः, ततः विभागजविभागः। तन्निरासार्थं विभागानुत्पाद्येति ॥ १९२ ॥

**तन्मात्रावस्थायि क्षणिकम् ॥ १९३ ॥**

क्षणमात्रावस्थायि यद्वस्तु भवति तत्क्षणिकम् ॥ १९३ ॥

उत्पत्तिस्थितिविनाशलक्षणः कालस्त्रिविध उक्त आसीत्। तत्रोत्पत्तिर्लक्षिता, स्थितिं लक्षयति—

**स्थितिर्वर्तमानत्वम् ॥ १९४ ॥**

---

१ °संबद्ध° क.। २ °द्योऽविभा° अ. १।

स्थितिलक्षणः कालः क उच्यते ? यद्वस्तूनां वर्त्तमानत्वम् ॥ १९४ ॥

वर्त्तमानत्वं तत्किमित्याशङ्क्याह—

**तच्च प्रागभावप्रध्वंसाभावरहितस्वरूपत्वम् ॥ १९५ ॥**

प्रागभावो वस्तूनां विनष्टो भवति, प्रध्वंसाभावोऽनुत्पन्नो भवति, वस्तूनां स्वरूपं वर्त्तते तद्वर्त्तमानत्वम् ॥ १९५ ॥

वर्त्तमानस्वरूपलक्षणान्तरमाह—

**स्वकार्यप्रागभावसम्बद्धत्वं वा ॥ १९६ ॥**

स्वकार्ये स्वस्मिन् समवेतं कार्यं तस्य प्रागभावोऽनुत्पत्तिस्तेन सह सम्बद्धत्वं तद्वर्त्त-मानत्वम्। अथवा वर्त्तमानत्वं तदुच्यते यावत् स्वसमवेतं कार्यं द्रव्यान्तरमनुत्पादितं भवति; यथा तन्तवः यावन्नोत्पादयन्ति पटम्, उत्पादिते पटे तन्तूनां वर्त्तमानत्वं न स्यात् पटोऽय-मित्येवं व्यपदिश्यमानत्वात् ॥ १९६ ॥

अथ विनाशं लक्षयति—

**विनाशः प्रध्वंसः ॥ १९७ ॥**

स्पष्टम् ॥ १९७ ॥

आत्मनो भेदद्वयमुक्तम्। तत्र क्षेत्रज्ञं लक्षयति—

**शरीरसम्बन्धेन ज्ञानवत्त्वं क्षेत्रज्ञत्वम् ॥ १९८ ॥**

शरीरसम्बन्धमात्रेण यः आत्मा ज्ञानवान् भवति, व्यापकोऽप्यात्मा यावत्-प्रदेशे शरीरं भवति तत्रैव ज्ञानवान् स्यात् नान्यत्रेति स क्षेत्रज्ञ इति ॥ १९८ ॥

मनसः प्रत्यात्मनिष्ठत्वादनन्तत्वमुक्तम्। तत्प्रत्यात्मनिष्ठत्वं किं प्रत्यात्मसंयोगः सम-वायो वा ? न तावत् समवायः, अमूर्त्तद्रव्ये द्रव्यान्तरसमवायाऽसम्भवात्। नापि संयोगः, आत्मनां विभुत्वात् विभूनां च सर्वमूर्त्तद्रव्यैः सह संयोगित्वात्, मनसश्च मूर्त्तत्वात्। अतः सर्वात्मनां सर्वैर्मनोभिः सह संयोगित्वात् 'इदं मनः अस्य' इति व्यवस्था न स्यादित्या-शङ्क्याह—

**प्रत्यात्मसमवेतधर्माधर्मोपगृहीतत्वं प्रत्यात्मनिष्ठत्वम् ॥ १९९ ॥**

आत्मानमात्मानं प्रति यौ समवेतौ धर्माधर्मौ ताभ्यामुपगृहीतत्वम् 'इदं मनोऽस्यै-वात्मनः' इति प्रतिनियतीकृतत्वं प्रत्यात्मनिष्ठत्वम् ॥ १९९ ॥

---

१ प्राक्सम्बद्धस्वभावरहितस्वरूपत्वम् क. नि । २ सम्बन्धित्वम् क. नि. ।

यौगपद्यमित्युक्तं तत्किमुच्यते इत्याशङ्क्य तल्लक्षयति—

**अनेकेषामेकक्षणसम्बन्धो यौगपद्यम् ॥ १९१ ॥**

अनेकेषां बहूनां तन्तूनामेकस्मिन्क्षणे कालविशेषे यः सम्बन्धः परस्परं सान्निध्यं तद्यौगपद्यम् । अथवा एकेन क्षणेन सह यः सम्बन्धः संयोगः तद्यौगपद्यम् । सम्बन्धो यौगपद्यमित्युक्ते समवायोऽपि तत्स्यात्तन्निवृत्त्यर्थं क्षणेति । क्षणेन सह सम्बन्धः क्षणसम्बन्धः, स चातीतानागतवार्त्तमानिकानां द्रव्याणां सर्वेषामप्यस्ति क्षणस्य कालविशेषत्वात् कालस्यामूर्तद्रव्यत्वादमूर्तद्रव्यस्य च समस्तैः मूर्तैः सह संयोगित्वात्; तद्व्यवच्छित्त्यै एकेति । सम्बन्धः पृथग्भूतैर्बहुभिः क्षणैरस्ति नैकेन । तथोक्तेऽपि एकस्य वस्तुन एकेन क्षणेन सह सम्बन्धो यौगपद्यं स्यात् तन्निवृत्त्यर्थम् अनेकेषामिति ॥ १९१ ॥

क्षणसम्बन्ध इत्युक्तं तेन स क्षणः किंलक्षण इत्याशङ्क्य तं लक्षयति—

**विभागानुत्पाद्यविभागप्रागभावसंबन्धकर्मावच्छिन्नः कालः क्षणः ॥ १९२ ॥**

विभागेनाऽनुत्पाद्यो विभागो विभागाऽनुत्पाद्यविभागः कर्मजविभाग इत्यर्थः । तस्य प्रागभावस्तेन सह सम्बन्धो विशेषणविशेष्यभावलक्षणः, कर्म च । ताभ्यामवच्छिन्नो विभागीकृतो यावान् कालविशेषः स क्षण इत्यवयवार्थः ।

भावार्थस्त्वयम्—उद्दण्डदण्डायुधाभिघातात् घटशकलेषु कर्मोत्पद्यते, कर्मणा विभागो भवति, विभागाच्च विभागज विभागो भवति । अतः कर्म जातं भवति, कर्मजो विभागोऽनुत्पन्नो भवति । तावान् कालविशेषः क्षण इत्युच्यते । कालः क्षण इत्युक्ते युगादावतिव्याप्तिः । तन्निरासार्थं कर्मावच्छिन्न इति । तथोक्ते कर्मापि द्वित्रिक्षणेऽवस्थायि भवतीति तत्रातिप्रसक्तिः । तन्निरासार्थं विभागप्रागभावसम्बन्धेति । तथोक्ते क्षणद्वयेऽतिप्रसक्तिः विभागजविभागप्रागभावेन कर्मणा च सह सम्बन्धो भवति क्षणद्वयम्, पूर्वं कर्म, ततः कर्मजः, ततः विभागजविभागः । तन्निरासार्थं विभागानुत्पाद्येति ॥ १९२ ॥

**तन्मात्रावस्थायि क्षणिकम् ॥ १९३ ॥**

क्षणमात्रावस्थायि यद्वस्तु भवति तत्क्षणिकम् ॥ १९३ ॥

उत्पत्तिस्थितिविनाशलक्षणः कालस्त्रिविध उक्त आसीत् । तत्रोत्पत्तिर्लक्षिता, स्थितिं लक्षयति—

**स्थितिर्वर्तमानत्वम् ॥ १९४ ॥**

---

१ 'सबद्ध' क. । २ 'त्रोऽविभा' अ. १ ।

संयोगाऽसमवायिकारण इति । विभागादिनिरासार्थं संयोग इति ॥ २०७ ॥

विभागभेदौ लक्षयति—

**कर्म्मासमवायिकारणो विभागः कर्म्मजः ॥ २०८ ॥**

कर्म्मैवाऽसमवायिकारणं यस्येति सः । विभागजविभागनिरासार्थं कर्म्माऽसमवायिकारण इति । संयोगादिनिरासार्थं विभाग इति ॥ २०८ ॥

**विभागाऽसमवायिकारणो विभागो विभागजः ॥ २०९ ॥**

कर्म्मजविभागनिरासार्थं विभागाऽसमवायिकारण इति । विभागाऽसमवायिकारणो विभागज इत्युक्ते विभागजशब्देऽतिप्रसक्तिः । तन्निरासार्थं विभाग इति ॥२०९॥

परत्वाऽपरत्वभेदौ लक्षयति—

**आदित्यपरिवर्त्तनोत्पाद्यं परत्वापरत्वं कालकृतम् । आदित्यसंयोगाऽनुत्पाद्यं परत्वाऽपरत्वं दिक्कृतम् ॥ २१० ॥**

आदित्यपरिवर्त्तनेनोत्पाद्यं वृद्धे पुरुषे परोऽयमिति प्रत्ययनिमित्तं परत्वं कालकृतम् । अल्पीयसि पुरुषे अपरोऽयमिति प्रत्ययनिमित्तमपरत्वं कालकृतम् । आदित्यसंयोगानपेक्षदिशा दूरस्थे वस्तुनि परोऽयमिति-प्रत्ययनिमित्तं परत्वं दिक्कृतम् । आसन्ने वस्तुनि अपरोऽयमिति प्रत्ययनिमित्तमपरत्वं दिक्कृतम् ॥ २१० ॥

बुद्धेर्भेदस्य स्मृतेर्लक्षणमाह—

**भावनाऽसाधारणकारणं ज्ञानं स्मृतिः ॥ २११ ॥**

भावना संस्कारविशेषः एवाऽसाधारणं कारणं यस्य एवंविधं यज्ज्ञानं सा स्मृतिः । ज्ञानं स्मृतिरित्युक्ते प्रत्यभिज्ञानेऽतिव्याप्तिः स्यात्, तन्निरासार्थमसाधारणमिति । ज्ञानपदं स्वरूपपरम् ॥ २११ ॥

अनुभवं लक्षयति—

**अस्मृतिरूपं ज्ञानमनुभवः ॥ २१२ ॥**

---

१ 'पटादीति पाठान्तरम्' इति अ. १ पुस्तके टिप्पणम् । मितभाषिण्या "संयोगाऽसमवायिकारणः संयोग इत्युक्ते पटादावतिव्याप्तिः तस्यापि तन्त्वादि संयोगासमवायिकारणजन्यत्वात्, अतः संयोग इति" (क पुस्तके मि. भा पृ ५८. प १५) इति व्याख्यादर्शनात् कश्चिज्जिनवर्धन्यामपि सम्भवेदयं पाठः । २ आदित्यसंयोगोत्पाद्ये परत्वापरत्वे कालकृते । आदित्यसंयोगानुत्पाद्ये परत्वापरत्वे दिक्कृते क नि । ३ 'अपरत्व' इति अ. १ पुस्तके अधिकम् । ४ तत्ताऽवच्छिन्नं प्रत्यभिज्ञानं यथा ५ एवायं देवदत्तः अ. १. पा. टि. ।

अथ रूपाणां सितादयो भेदाः सन्तीति तल्लक्षणमाह—

**सितादीनां सप्तानां सितत्वादिकम् ॥ २०० ॥**

सितादीनां रूपाणां सितत्वादिकं लक्षणं भवति । एतावता सितत्व-सामान्यवत् सितं रूपम्, पीतत्वसामान्यवत् पीतं रूपमित्यादि ॥ २०० ॥

रसभेदानां लक्षणान्याह—

**मधुरादीनां मधुरत्वादिकम् ॥ २०१ ॥**

व्याख्या पूर्ववत् ॥ २०१ ॥

गन्धभेदयोर्लक्षणमाह—

**गन्धयोः सुरभित्वाऽसुरभित्वे ॥ २०२ ॥**

सुरभित्वसामान्यवान् सुरभिर्गन्धः, असुरभित्वसामान्यवान् असुरभिर्गन्धः ॥२०२॥

स्पर्शभेदानां लक्षणमाह—

**शीतादीनां शीतत्वादिकम् ॥ २०३ ॥**

सङ्ख्याभेदानां लक्षणमाह—

**एकत्वादीनामेकत्वादिकम् ॥ २०४ ॥**

परिमाणभेदानां लक्षणमाह—

**अणुत्वादीनामणुत्वादिकम् ॥ २०५ ॥**

अथ संयोगभेदलक्षणमाह—

**कर्म्मासमवायिकारणः संयोगः कर्म्मजः ॥ २०६ ॥**

कर्म्म, असमवायिकारणं यस्य सः कर्म्माऽसमवायिकारणः, ईदृशो यः संयोगः स कर्म्मजः संयोगः । कर्म्मज इत्युक्ते संयोगजसंयोगेऽतिप्रसक्तिः तन्निरासार्थं कर्म्माऽसमवायिकारण. । तथोक्ते विभागे वेगे चातिव्याप्तिः, तन्निरासार्थं संयोगः ॥ २०६ ॥

संयोगजसंयोगस्य लक्षणमाह—

**संयोगाऽसमवायिकारणः संयोगः संयोगजः ॥ २०७ ॥**

संयोग एवाऽसमवायिकारणं यस्य सः संयोगजसंयोगः । कर्म्मजसंयोगव्युदासार्थं

१ सितत्वादिकं लक्षणम् क नि. । २ शीतानां अ १ । ३ एकत्वत्वादिकम् क. । ४ अणुत्वत्वादिकम् क. । ५, ६ 'स' इति अ १ आदर्शपुस्तके भ्रष्टम् । ७ कारणम् अ १ ।

सयोगाऽसमवायिकारण इति । विभागादिनिरासार्थं सयोग इति ॥ २०७ ॥

विभागभेदौ लक्षयति—

**कर्म्मासमवायिकारणो विभागः कर्म्मजः ॥ २०८ ॥**

कर्म्मैवाऽसमवायिकारण यस्येति स । विभागजविभागनिरासार्थं कर्म्माऽसमवायिकारण इति । सयोगादिनिरासार्थं विभाग इति ॥ २०८ ॥

**विभागाऽसमवायिकारणो विभागो विभागजः ॥ २०९ ॥**

कर्म्मजविभागनिरासार्थं विभागाऽसमवायिकारण इति । विभागाऽसमवायिकारणो विभागज इत्युक्ते विभागजशब्देऽतिप्रसक्तिः । तन्निरासार्थं विभाग इति ॥२०९॥

परत्वाऽपरत्वभेदौ लक्षयति—

**आदित्यपरिवर्त्तनोत्पाद्यं परत्वापरत्वं कालकृतम् । आदित्यसंयोगाऽनुत्पाद्यं परत्वाऽपरत्वं दिक्कृतम् ॥ २१० ॥**

आदित्यपरिवर्त्तनेनोत्पाद्य वृद्धे पुरुषे परोऽयमिति प्रत्ययनिमित्त परत्व कालकृतम् । अणीयसि पुरुषे अपरोऽयमिति प्रत्ययनिमित्तमपरत्व कालकृतम् । आदित्यसयोगानपेक्षदिगा दूरस्थे वस्तुनि परोऽयमिति प्रत्ययनिमित्त परत्व दिक्कृतम् । आसन्ने वस्तुनि अपरोऽयमिति प्रत्ययनिमित्तमपरत्वं दिक्कृतम् ॥ २१० ॥

बुद्धेर्भेदस्य स्मृतेर्लक्षणमाह—

**भावनाऽसाधारणकारणं ज्ञानं स्मृतिः ॥ २११ ॥**

भावना सस्कारविशेष एवाऽसाधारण कारण यस्य एवविध यज्ज्ञान सा स्मृति । ज्ञानपद ज्ञान स्मृतिरित्युक्ते प्रत्यभिज्ञानेऽतिव्याप्ति स्यात्, तन्निरासार्थमसाधारणमिति । ज्ञानपद स्वरूपपरम् ॥ २११ ॥

अनुभवं लक्षयति—

**अस्मृतिरूपं ज्ञानमनुभवः ॥ २१२ ॥**

---

१ 'पटादीति पाठान्तरम्' इति अ १ पुस्तके टिप्पणम् । मितभाषिण्या "सयोगाऽसम
वायिकारण सयोग इत्युक्ते पटादावतिव्याप्ति तस्यापि तन्त्वादि सयोगासमवायिकारणजन्यत्वात्, अत सयोग इति" (क पुस्तके मि. भा पृ ५८ प १५) इति व्याख्यादर्शनात् कश्चिज्जिन
यधन्यामपि सम्भवेदय पाठ । २ आदित्यसयोगोत्पाद्य परत्वापरत्वे कालकृते । आदित्यसयोगा-
नुत्पाद्ये परत्वापरत्वे दिक्कृते क नि । ३ 'अपरत्व' इति अ १ पुस्तके अधिकम् । ४ तत्ताऽवच्छिन्न
प्रत्यभिज्ञान यथा स एवाय देवदत्त अ १ पा. टि ।

स्मृतिव्यतिरिक्तं यज्ज्ञानं स अनुभवः ॥ २१२ ॥

अनुभवभेदं प्रमामप्रमां च लक्षयति—

**तत्त्वानुभवः प्रमा ॥ २१३ ॥**

तत्त्वानुभवः सम्यगनुभवः ॥ २१३ ॥

**अतत्त्वज्ञानमप्रमा ॥ २१४ ॥**

अलीकज्ञानमप्रमेति ॥ २१४ ॥

अथाप्रमाभेदान् लक्षयति—

**अनवधारणं ज्ञानं संशयः ॥ २१५ ॥**

न विद्यते अवधारणं निश्चयात्मकं ज्ञानं यत्र तदनवधारणं ज्ञानं यथा स्थाणुर्वा पुरुषो चेति ॥ २१५ ॥

**अवधारणरूपाऽतत्त्वज्ञानं विपर्ययः ॥ २१६ ॥**

अवधारणरूपं निश्चयात्मकं यत् अतत्त्वज्ञानमलीकज्ञानं स विपर्ययः । यथा शुक्तिशकले कलधौताद्यारोपः ॥ २१६ ॥

अथ प्रमाभेदं प्रत्यक्षप्रमां लक्षयति—

**अज्ञायमानकरणजन्यस्तत्त्वानुभवः प्रत्यक्षप्रमा ॥ २१७ ॥**

यस्य करणम् असाधारणं कारणं न ज्ञायते प्रत्यक्षेण नोपलभ्यते एवंविधो यः 'तत्त्वानुभवः' सा 'प्रत्यक्षप्रमे'ति। यथा 'घटोऽयं' 'पटोऽयम्' इति ज्ञानम्, तस्य साधारणं कारणं चक्षुरादीन्द्रियं तत्प्रत्यक्षेण नोपलभ्यते, इन्द्रियाणामतीन्द्रियत्वात् ॥ २१७ ॥

**ज्ञायमानकरणजन्यस्तत्त्वानुभवोऽनुमितिप्रमा ॥ २१८ ॥**

यस्य करणम् असाधारणं कारणं ज्ञायते प्रत्यक्षेणोपलभ्यते सा 'अनुमितिप्रमा' । यथा धूमानुमाने वह्न्यनुमितौ धूमो लिङ्गं प्रत्यक्षेणैवोपलभ्यते ॥ २१८ ॥

अथ प्रसङ्गायातं प्रमाणं लक्षयति—

**साधनाश्रययोरन्यतरत्वे सति प्रमायोगव्यवच्छिन्नं प्रमाणम् ॥२१९॥**

प्रमया सह योगः सम्बन्धः तेन सह व्यवच्छिन्नं व्याप्तं साधनत्वेन आश्रयत्वेन

१ 'साधनाश्रययोरन्यतरत्वे सति' इति क. नि पुस्तकयोर्नास्ति तत्र च प्रमाऽयोगव्यवच्छिन्नम् इति पाठः । अत्र च जिनवर्धनीसम्मत- 'प्रमायोगव्यवच्छिन्नम्' इति पाठः ।

वा यत् तत् प्रमाणम्। यथा इन्द्रियार्थसन्निकर्षादिः साधनत्वेन प्रमया सह व्याप्तः। यत्रेन्द्रियार्थसन्निकर्षस्तत्र प्रमोत्पत्तिर्भवत्येव इति साधनत्वेन प्रमाव्याप्त इन्द्रियार्थसन्निकर्षादिः प्रमाणम्। आश्रयत्वेन ईश्वरः प्रमाणम्। सोऽपि प्रमायोगेन सह व्याप्तः। यत्र ईश्वरस्तत्र प्रमायोगो भवत्येव, ईश्वरप्रमाया नित्यत्वात्। प्रमाणमित्युक्ते साकाङ्क्षता, तन्निरासार्थं व्यवच्छिन्नमिति। तथोक्ते व्याप्तिरुभयाश्रिता भवति, अत केन सहेति साकाङ्क्षता तथैव, तन्निरासार्थं साधनाश्रययोरन्यतरत्वे सतीति। सुखादिकं साधनमपि न भवति, आश्रयोऽपि न भवति, इन्द्रियार्थसन्निकर्षादेः साधनत्वात् आत्मनश्चाश्रयत्वात् ॥ २१९ ॥

**साधनाश्रययोरन्यतरत्वे सति प्रत्यक्षप्रमायोगव्यवच्छिन्नं प्रत्यक्षप्रमाणम् ॥ २२० ॥**

प्रत्यक्षप्रमायोगेन सह व्याप्तं प्रत्यक्षप्रमाणम् ॥ २२० ॥

तच्च किमित्याह—

**तच्चेश्वरघ्राणरसनचक्षुःस्पर्शनश्रोत्रमनोलक्षणम् ॥ २२१ ॥**

ईश्वरः प्रत्यक्षप्रमया साक्षादेव बोधलक्षणया आश्रयत्वेन व्याप्तः। घ्राणादीन्द्रियं साधनत्वेन व्याप्तम्। यद्यपीन्द्रियार्थसन्निकर्ष एव प्रमाव्याप्तोऽस्ति, इन्द्रिये सत्यपि सुखादौ प्रमाया अनुत्पादात्, तथापि तस्येन्द्रियार्थसन्निकर्षस्याश्रयभूतत्वाद् इन्द्रियमेव प्रमाणत्वेनोक्तम्, आश्रयाऽऽश्रयिणोरभेदोपचारात् ॥ २२१ ॥

अनुमितिप्रमा लक्षयति—

**अनुमितिप्रमायोगव्यवच्छिन्नं प्रमाणमनुमानम् ॥ २२२ ॥**

अनुमितिप्रमा लिङ्गोत्पाद्यसम्यगनुभवस्तेन सह योगः सम्बन्धः साध्यसाधनभावलक्षणः, तेन सह व्यवच्छिन्नं व्याप्तं तदनुमानम् ॥ २२२ ॥

तच्च किमित्याह—

**तच्च व्याप्तिपक्षधर्मताविशिष्टं लिङ्गज्ञानम् ॥ २२३ ॥**

व्याप्तिः—यत्र यत्र साधनं तत्र तत्र साध्यम्, यत्र साध्यं नास्ति तत्र साधनमपि नास्ति इति लक्षणा, पक्षधर्मता च पक्षे हेतोर्व्याप्यवृत्तित्वम्, ताभ्यां विशिष्टं सहितं यल्लि-

१ अत्र द्वयोरप्यादर्शयोः 'साकाङ्क्ष० तन्नि०' 'साका० तन्नि०' इति च संक्षिप्य लिखितं वर्तते। २ 'साधनाश्रययोरन्यतरत्वे सति' इति 'क नि' पुस्तकयोर्नास्ति। ३ तच्च ईश्वर इति 'क नि' पुस्तकाभ्यां गृहीतम्। ४ 'विशिष्ट' 'क नि'।

ङ्गस्य हेतोर्ज्ञानं तदनुमानम् । अनुमानमित्युक्ते साकाङ्क्षता, तन्निरासार्थं ज्ञानम् । तथोक्ते पक्षादिज्ञानेऽतिव्याप्तिस्तन्निरासार्थं लिङ्गज्ञानमिति । तथोक्ते 'अनित्यः शब्दः प्रमेयत्वात्' इत्यादावतिव्याप्तिस्तन्निरासार्थं व्याप्तिविशिष्टम् । अत्र तु अनित्यत्वेन प्रमेयत्वस्य व्याप्तिर्नास्ति । तथोक्ते 'नित्यः शब्दः अमूर्तद्रव्यत्वाद्' इत्यादावतिव्याप्तिस्तन्निरासार्थं पक्षधर्मताविशिष्टम्; अत्र तु नित्यत्वेन अमूर्तद्रव्यं व्याप्तमस्ति तथापि पक्षे शब्दे नास्ति ॥ २२३॥

व्याप्तिं लक्षयति—

**व्याप्तिश्च व्यापकस्य व्याप्याधिकरणोपाध्यभावविशिष्टः सम्बन्धः ॥ २२४ ॥**

व्यापकस्य साध्यस्य व्याप्याधिकरणः साधनाधिकरणः उपाध्यभावविशिष्टो निरुपाधिको यः सम्बन्धः स व्याप्तिः । सम्बन्धो व्याप्तिरित्युक्ते संयोगेऽतिव्याप्तिस्तन्निरासार्थं व्याप्याधिकरण इति । सम्बन्धस्य द्वयनिष्ठत्वात् कस्य सम्बन्धस्य इति साकाङ्क्षता तन्निरासार्थं व्यापकस्येति । तथोक्ते वैधी हिंसा अधर्म्मसाधनं हिंसात्वात् ब्राह्मणहिंसावत् इत्यादि सोपाधिकायां व्याप्तावतिव्याप्तिस्तन्निरासार्थम् 'उपाध्यभावविशिष्टम्' इति ॥ २२४ ॥

पक्षधर्म्मतां लक्षयति—

**पक्षधर्म्मता च व्याप्यस्य पक्षसम्बन्धः ॥ २२५ ॥**

व्याप्यस्य हेतो यः पक्षेण सह सम्बन्धः पक्षे व्याप्यवृत्तित्वं सा पक्षधर्म्मता ॥२२५॥

व्यापकव्याप्ये लक्षयति—

**व्यापकं साध्यम् । व्याप्यं साधनम् ॥ २२६ ॥**

अधिकवृत्तित्वात् साध्यं व्यापकं भवति । न्यूनवृत्तित्वात् लिङ्गं हेतुर्व्याप्यं भवतीति ॥ २२६ ॥

उपाधिं लक्षयति—

**उपाधिश्च साधनाव्यापकत्वे सति साध्यसमव्याप्तिः ॥ २२७ ॥**

साधनेन हेतुना सह यो धर्म्मः अव्यापको भवति साध्येन सह समव्याप्तिर्भवति स उपाधिः । यथा 'वैधी हिंसा अधर्म्मसाधनं हिंसात्वात् ब्राह्मणहिंसावत्'; अत्र निषिद्धत्वमुपाधिः । अत्र साधनं हिंसात्वं तत् निषिद्धत्वेनाव्याप्तम् । यत्र यत्र हिंसात्वं तत्र तत्र निषिद्धत्वमिति नास्ति, वैधीहिंसायां हिंसात्वे सत्यपि निषिद्धत्वाभावात् । यत्र यत्र अधर्म-

---

१ व्याप्याधिकरणः उपाध्यभावविशिष्टः क. नि । २ 'इति अ. १ पुस्तके नास्ति । ३ तु क. नि । ४ लिङ्गम् क नि ।